श्रीः

# श्रीयदुशैलचम्पूः

जग्गु-शिङ्गरार्यविरचिता



मूल्यम् :— १२ आणकाः

BANGALORE CITY
B. B. D. POWER PRESS, COTTONPET
1932

श्रीरस्तु

श्रीहयग्रीवाय नमः

॥ श्रीमते रामानुजाय नमः ॥

जग्गु-शिङ्गरार्यविरचिता

# श्री य दु शै ल च म्पू :



बि. वि. डि. पवर् प्रेस्
अरळेपेटे, – – बेंगळूरु सिटि

क्रि. श. १९३२

मूल्यम् :– १२ आणकाः

श्रीः

# विज्ञापना

अखिलहेयप्रत्यनीकानन्तकल्याणगुणगणाकरस्याष्टोत्तरशतदिव्यक्षेत्रसारभूतश्रीयदुशैलनायकस्य श्रीमन्नारायणस्य सौन्दर्यसौलभ्यादिनिरतिशयमङ्गळगुणान् भूयोभूयोऽनुभूय च विचित्रतरविविधमितिहासं तदीयं श्रावंश्रावं च तल्लीनान्तःकरणवृत्तिरनभिज्ञोऽपि तं स्तोतुकामः नारदीयपुराणादिषु सुप्रसिद्धं तदीयमितिवृत्तमनुसृत्य च कालान्तरे प्रशिथिलमेतत्पुण्यक्षेत्रं श्रीरामानुजाचार्यवर्यैर्महता परिश्रमेण समुद्धृतमिति यत्तदपि चरितमनुरुध्य च चम्पूग्रन्थममुं षोडशसंवत्सरेभ्यः प्राक् तस्यैव परमात्मनः प्रसादाद्व्यरचयम् । सर्वत्र प्रकटयितुमेतं ग्रन्थं मुद्रयितुकामः कालमियन्तं प्रतीक्षमाणोऽप्यनासादितद्रव्यसाह्यो जीवितस्य भङ्गुरतया कथमप्यवश्यमिदानीं मुद्रयितव्योऽयमिति दृढसङ्कल्पः सहसा प्रवृत्य महतां केषाञ्चिद्यथोचितद्रव्यसाह्येन सामान्यतस्सम्पादितावलम्बनः कृतकृत्योऽस्मि चिरादिदानीम् । काव्यरसास्वादननिपुणानां विदुषां दृष्टेर्विषयीभवत्विदं काव्यमित्येव महानयं मे परिश्रमः । अतस्सहृदयास्सर्वे विद्वांसः कृपया ग्रन्थममुं सावधानेन मनसावलोक्य मम प्रयत्नं सफलयन्त्विति सततं भगवन्तं श्रीनाथं प्रार्थये ॥

गच्छत्पदं स्खलति जातु तदत्र काव्ये
दोषाः प्रमादजनिताः कतिचिद्यदि स्युः ।
तान् सूचयन्ति मम ये सुहृदोऽनसूयाः
तेषां चिरादयमहं नितरां कृतज्ञः ॥

इति ग्रन्थकर्ता,
जग्गु-शिङ्गरार्यः,
सज्जनविधेयः

श्रीः

## एतद्ग्रन्थकर्तुः कवित्वप्रशंसनानि प्रशस्तिपत्राणि

(श्री॥ उ॥ परमहंसपरिव्राजकेत्यादिविरुदालंकृतैः श्रीयदुगिरिसम्पत्कुमाररामानुजयतिवरैरनुगृहीतं प्रशस्तिपत्रम्)–

व्रजभुवि यदुपुङ्गवस्य वृत्ता-
न्यनुकृतराघवजन्मचेष्टितानि ।
विरचितमधिकृत्य काव्यमेत-
ल्ललिततमं विबुधोपहारयोग्यम् ॥ १ ॥

कृतिवरमुपवर्ण्य चित्रकूटं
तनु यमकं, यमकम्पितार्थमाह ।
कविरवनिसुतारघूद्वहोक्ति-
प्रचुरमसावपि पण्डितादरार्हः ॥ २ ॥

इति कृतियुगलीमवेक्ष्य साक्षात्
यदुगिरिकौशिकशिङ्गरार्यबद्धाम् ।
यदुगिरियतिराजराजसम्प-
त्सुतमुनिरित्थमतन्तनीत्प्रशस्तिम् ॥ ३ ॥

प्रमोद सं०
माघ कृष्ण द्वितीया बुधवासरे
शकाङ्काः १८५३

(ग्रन्थाक्षरे)
श्रीरामानुजः

श्रीः

शुभमस्तु

(महामहोपाध्यायैः पण्डितरत्नश्रीलक्ष्मीपुरं-श्रीनिवासाचार्यविद्वद्वरेण्यैरनुगृहीतं प्रशस्तिपत्रम्)—

ललित्यमर्थगरिमारसभावरीति-
प्रागल्भ्यमुख्यसुगुणाः धुतदोषगन्धाः ।
काव्येषु कौशिककुलोद्भवशिङ्गरार्यैः
बद्धेषु पण्डितमनांस्यनुरञ्जयन्ति ॥ १ ॥

पदानां गाम्भीर्यं सरसमधुरार्थैस्समुचितः
रसालङ्कारादिप्रचुरगुणसन्दर्भमहिमा ।
अनन्यास्पृष्टास्तेऽप्यतिसुभगभावाश्च बहुशः
प्रबन्धानामस्य प्रविदधति शोभामभिनवाम् ॥ २ ॥

एतादृशोऽस्य सुकवेः कवितालतायाः
स्वैरोच्छ्राय नरपालमणिप्रसादः ।
विद्वज्जनानघकृपाऽप्यवलम्बनं चेत्
सा विस्तृता भवति नूनमितोऽपि रम्या ॥ ३ ॥

श्रीशिङ्गरार्यकविवर्यशुभाभिवृद्ध्यै
भास्वत्प्रशस्तिवरपत्रमिदं वितीर्णम् ।
लक्ष्मीपुरं-विबुधरत्नमहामहार्य-
श्रीश्रीनिवासविदुषा विदुषां मुदे स्यात् ॥ ४ ॥

मैसूरु,
13—4—1931

महामहोपाध्यायः
पण्डितरत्नम्
लक्ष्मीपुरं-श्रीनिवासाचार्यः

श्रीरस्तु

(श्रीमत्काञ्चीपुरवरालङ्कारैः अण्णङ्गार्याभिख्यैः पण्डितप्रकाण्डै-रनुगृहीतं प्रशस्तिपत्रम्)—

श्रीमद्यादवशैलवासरसिकैर्विद्यानिषद्यात्मकैः
विद्वत्सन्ततिसिन्धुशीतकिरणैस्स्वाधीनवाग्गुम्भनैः ।
जग्गु-श्रीयुतशिङ्गरार्यविबुधैर्विद्वन्मणीनां मुदे
सृष्टास्सूक्तिततीरतीव मधुराः बह्वीस्समालोकयम् ॥ १ ॥

अनायासमाविर्भवद्भिः पदौघैः सुहृद्यानि गद्यानि पद्यानि सद्यः ।
सृजन्नेष साधुः कवीनां वतंसः हरत्यन्तरङ्गं समेषां बुधानाम् ॥ २ ॥

एतत्प्रणीतमिह कृष्णकथारहस्यसंज्ञं प्रबन्धमतुलं सुमनोमनोज्ञम् ।
द्राक्षासदृक्षमृदुसूक्तिततिप्रगल्भं दृष्ट्वा प्रमोदभरनिर्भरहृद्भवामि ॥ ३ ॥

श्रीचित्रकूटगिरिवर्णनजागरूकमत्यन्तभोग्यमभिरामपदैकराशिम् ।
सद्ग्रन्थरत्नमदसीयमवेक्षमाणो दासः प्रमोदमधिगच्छति दिव्यभव्यम् ॥४॥

एवं नाम हरेर्गुणाननवधीनाम्रेडयन् सूक्तिभिः
सोऽयं पण्डिततल्लजः कविवरः श्रीशिङ्गरार्याभिधः ।
भक्तानाममृतोपमाः कृतिततीर्नित्यं समुद्भावयन्
जेजेतु क्षितिमण्डलेऽत्र सततं जीवातुभूतस्सताम् ॥ ५ ॥

काञ्चीवादिभयङ्करवंशीयाण्णङ्गरार्यदासाग्र्यः ।
हर्षप्रकर्षविवशो व्यलिखत्प्रेम्णा प्रशस्तिपत्रमिदम् ॥ ६ ॥

प्रजोत्पत्यभिधे वर्षे कर्कटे पूर्णिमातिथौ ।
काञ्चीतः प्रेषिता सेयं पत्रिका प्रेमपुष्कला ॥ ७ ॥

इति

29—7—31

प्र. अं. दासः

ಶ್ರೀಃ

ಶ್ರೀಮತ್ಪರಮಹಂಸಪರಿವ್ರಾಜಕೇತ್ಯಾದಿಬಿರುದಾಂಕಿತರಾದ

ಶ್ರೀಬ್ರಹ್ಮತಂತ್ರಪರಕಾಲಮಹಾಸ್ವಾಮಿಗಳ ಮಹಾಸನ್ನಿಧಾನದಿಂದ—

ಮೈಸೂರು,

ಶ್ರೀನಂಬರು ೧. (ಇಲ್ಲಿ ಮಠದ ಮುದ್ರೆ ಇದೆ.) ತಾ|| 6—1—1932.

ಶ್ರೀಶ್ರೀಬ್ರಹ್ಮತಂತ್ರಪರಕಾಲಸ್ವಾಮಿಗಳವರ ಶ್ರೀಮಠದಿಂದ

ವಿದ್ವಾನ್ ಜಗ್ಗು ಶಿಂಗರಾಚಾರ್ಯರು ತಾವು ರಚಿಸಿರುವ ಕೃಷ್ಣಕಥಾರಹಸ್ಯ, ಯದುಶೈಲಚಂಪೂ,—ಈ ಗ್ರಂಥಗಳ ಕೆಲವು ಭಾಗಗಳನ್ನು ಶ್ರೀ ಶ್ರೀ ಸ್ವಾಮಿಗಳವರ ಮಹಾಸನ್ನಿಧಾನದಲ್ಲಿ ಪಠಿಸಿ ಅರಿಕೆಮಾಡಿದರು. ಇದನ್ನು ಶ್ರೀ ಶ್ರೀಸ್ವಾಮಿಗಳವರು ಪರಾಮರ್ಶಿಸಿ—"ಇವರ ಕವಿತ್ವವು ಚನ್ನಾಗಿದೆ. ಪದಬಂಧವು ಲಲಿತವಾಗಿಯೂ, ಸರಣಿಯು ಹೃದ್ಯವಾಗಿಯೂ ಇವೆ. ಕವಿತಾ ಚಮತ್ಕಾರಗಳನ್ನು ಅಲ್ಲಲ್ಲಿ ತಕ್ಕಮಟ್ಟಿಗೆ ಸಹೃದಯಹೃದಯಾಕರ್ಷಕವಾಗಿ ತೋರಿಸಿರುವರು.—ಹೀಗೆ ಸಂಸ್ಕೃತಸಾಹಿತ್ಯಕುಶಲರು ವೃದ್ಧಿಗೆ ಬರಲಿ" ಎಂದು ಮಂಗಳಾಶಾಸನವನ್ನು ಅಪ್ಪಣೆಕೊಡಿಸಿರುತ್ತಾರೆ.

ತಿರುವಳ್ಳೂರ್ ಶ್ರೀನಿವಾಸರಾಘವಾಚಾರ್,

*Hon. Superintendent.*

# TESTIMONIALS

**Opinions of some Vidwans and Scholars appreciating the works of Sriman Jaggu Singara Iyengar, Sanskrit Pandit, Government Middle School, Tumkur.**

---

*Sriman Praktana Vimarsa Vichakshana Karnataka Prachya Vidya Vaibhava Rao Bahadur R. Narasimhacharya, Esq., M.A., M.R.A.S., Retired Director of Archeological Researches in Mysore, Bangalore.*

I have known Pandit Jaggu Singriengar for some years. He has written several Sanskrit Poems of which I have heard portions read out to me by himself. The verses flow smoothly and the style is simple and chaste. Even the Yamakas which he employs in some verses are easily intelligible, thus testifying to the facility and ease of his skill in composition.

He has a great desire to have his works printed, but owing to slender resources he is not in a position to do so. He deserves every encouragement.

Malleswaram; (Sd.) R. NARASIMHACHAR,
27—12—30. Retired.

---

*Sriman M. T. Narasimhiengar, Esq., B.A., M.R.A.S.*
*Sri Kalki, Sanskrit Professor, Central College,*
*Malleswaram, Bangalore.*

I feel very happy to introduce to the Literary World the bearer Pandit Jaggu Singara Iyengar of Melukote, whom I know very well since his childhood I know he has inherited a keen taste for poetising from his grandfather, the Great Vidwan Jaggu Singriengar Swami, among whose pupils several of the existing vidwans are to be counted in Melukote, Mandya and Elsewhere. The bearer has read out to me several portions from his Poetical works; and I am glad to say I have found them easy flowing in style and interesting in matter, and even his attempts at *Yamakas* and other *Sabdachitras* are very easily intelligible. As he is getting a small salary in his present post, he is unable to get his works (though very much appreciated by some vidwans and scholars) published at his own cost. I hope *all Patrons of Sanskrit Literature* will duly encourage this young and promising Pandit of Poetical talents.

Malleswaram, (Sd.) M. T. NARASIMHEINGAR,
27—12—30. (Srikalki, G. I.)

I entirely endorse this
Mysore, Veda Graham, 29—12—30.

(Sd.) A. GOVINDACHARYASWAMI.

---

*Sriman A. Govindacharyaswami, Veda Griham, Mysore.*

I fully and heartily endorse the opinion of Sri R. Narasimhacharya.

Mysore, (Sd.) A. GOVINDASWAMI.
30—12—30.

---

*Sriman Arthasastra Visarada Dr. R. Shamasastry, Ph.D., &c., Retired Curator and Director of Archeology, "Asutosh," Chamundi Extension, Mysore.*

I have great pleasure in bearing testimony to the excellent poetical talent which Jaggu Singara Iyengar has shown in his Poetical works, "Krishnakatha Rahasya", "Yadushaila Champu", "Chitrakuta-udanta" and works. The last named work is a work with "Yamaka," a kind of alliteration in which a word of three or four syllables is repeated with varied meaning. The Poet's Yamaka is so lucid as to need no dictionary or commentary to explain the meaning of the repeated portion. In General his Poetical diction runs smooth, elegant and clear with no sign of any laboured version. He richly deserves Patronage.

Mysore, (Sd.) R. SHAMASASTRY.
31—12—30.

I am happy to endorse the above opinion unqualifiedly.

Mysore, (Sd.) A. GOVINDACHARYASWAMI.
31—12—30.

---

*Sriman C. Ramanuja Iyengar, Esq., M.A., Headmaster, Govt. High School, Tumkur.*

I have very great pleasure in bearing testimony to the great learning and sound scholarship, particularly in Sahitya, of Sri Vidwan Jaggu Singara Iyengar, who is now employed as Sanskrit Pandit of the Government Middle School, Tumkur. He has got the rare gift of Poetic composition in Sanskrit and his rendering is really of a high order. His capacity to write poetry abounding in slesha, chitra, yamaka and such other artifices is an index to the Practice he has had so far in Poetic composition and also to what distinction he may rise in this field in the course of a few years. If his undertaking, by way of writing books in Sanskrit, should be patronised, there is every chance of good additions being made to Modern Sanskrit Literature. The Sanskrit Slokas he has read before me make me believe that he is quite deserving of every encouragement.

26—3—31. (Sd.) C. RAMANUJIENGAR.

---

*Sriman H. Yoganarasimhan, Esq., M.A., Principal, Maharaja's Sanskrit College, Mysore.*

It is a rare treat to listen to the enrapturing out pourings of a contemporaneous Sanskrit Poet. Sri Jaggu Singara Iyengar is a gifted Sanskrit Poet. His works

" Krishnakatha Rahasya " and " Chitrakuta-kavya " composed in easy delectable style may well be described as the latest ornaments of the Sanskrit muse, Fortune, jealous of this man's capacities has not favoured him. The public I feel, owe it to themselves to enable this poet to bring his productions to light by print—thereby contributing to the enjoyment of the larger circle of Sanskrit Savants.

11—4—31. (Sd.) H. YOGANARASIMHAN.

*Sriman V. Subramanya Iyer, Esq., M.A.,*
*Retired Registrar, Mysore University, Mysore.*

This is to certify that I have read some of the Poetic compositions of Sri Vidwan Singaracharya Sanskrit Pandit of the Government Middle School, Tumkur and that I have formed a high opinion of his talents. His verses abound in many artifices such as slesha, chitra and yamaka. He has an excellent command over Sanskrit language and possesses a facility which is not very common. He has in him the promise of a poet of great merit. His works deserve the patronage of the Education Department as well as of encouragement at the hands of the Public interested in Sanskrit.

(Sd.) SUBRAMANYA IYER.

Mysore,
14—4—31

॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

# श्रीयदुशैलचम्पूः

## प्रथमप्रपञ्चः

श्रीमन्नारायणेऽस्मिन् विहरति रमया नीळया भूमिदेव्या
यद्वद्रौ शे[1]षभावाच्छ्[2]वशुरमपि रहो वर्तमानं यतीन्द्रम् ।
दृष्ट्वा मन्दाक्षयुक्ताः नतमुखकमलाः पश्यतस्तांस्सहर्षं
विष्णोस्तस्यातिरम्या स्थितिरिह भवतु श्रेयसे भूयसे वः ॥ १ ॥

य आदौ शेषत्वं जगदवनधुर्यस्समभज-
द्धरेः श्रीरामत्वे तदवरजतां कृष्णजनुषि ।
तदग्रयत्वं चाहो यदुगिरिपतेरत्र तु महान्
पितृत्वं तं वन्दे यतिपतिमहं चित्रचरितम् ॥ २ ॥

येऽस्मत्पूज्यपितामहास्सुकृतिनस्स्वप्नप्रसन्नेन्दिरा-
पाङ्गालोकतरङ्गसेकविलसत्स्वान्तास्तदीयाज्ञया ।

---

१. शेषभावात्—भृत्यभावेन, आदिशेषत्वेन च । २. श्वशुरं—अत्र पुण्यक्षेत्रे यतीन्द्रो रामानुजाचार्यो नारायणं पुत्रत्वेन पर्यगणयदिति तस्य परमात्मनः पत्नीनां रमादीनामस्मिन् यतीन्द्रे श्वशुरत्वबुद्धिरिति भावः ॥

भक्त्या सूत्रपथानुगामनुपमां तां वृत्तमुक्तावळीं
निर्मायात्र समार्पयन् यदुगिरौ विष्णोः प्रियायै मुदा ॥ ३ ॥

शिङ्गरार्याभिधानानां पौत्रस्तेषां महात्मनाम् ।
नारायणार्याभिख्यानां पुत्रोऽहं शिङ्गराह्वयः ॥ ४ ॥

अन्यैरकथितभावैरचुम्बितार्थैर्मनोज्ञपदगुम्भैः ।
काव्यं करोमि यदुगिरिपरिबृढचरिताञ्चितं च तत्कृपया ॥ ५ ॥

चमत्कृतिः पुराणानां कवीनां वाचि वर्तते ।
हृद्येयमपि लक्ष्मीशनायकत्वाच्च मत्कृतिः ॥ ६ ॥

कविप्रशंसा रचिता स्वकाव्येष्वन्यत्र चालोक्य विशेषतोऽद्य ।
मयाऽपि तन्मार्गजुषेयमुक्ता वाणी न कुप्यन्तु ततो विदग्धाः ॥ ७ ॥

सरसतरकवित्वं श्लाघयद्भिस्सुधीभिः कुकविकृतिरियं च श्रूयते काङ्क्षयैव ।
जलदनिनदहृष्टो बर्हिणो दर्दुराणां ननु कटुरटनादप्येति संमोदमन्तः ॥८॥

ग॥ कदाचिदखिलतपोधनजनाः निजतपोनिधननिदानं कलिकलुषितमशेषमपि विषयमपनीय निष्प्रत्यूहतपश्चरणाय कलिकलितश्रमापहं किमप्याश्रमपदं विचारयन्तश्चेरुः ॥ ॥ ९ ॥

कुत्रचित्सूतमुनिमवलोक्य—
ख्यातं पुराणागमवित्सु पूतं सूतं मुनिं तं सुकृतैकहेतुम् ।
पप्रच्छुरप्राप्तकलिप्रवेशं स्थानं महच्छौनकमौनिमुख्याः ॥ १० ॥

---

३. सूत्रपथानुगां — तन्तुमार्गानुगतां, पिङ्गळसूत्रादिच्छन्दश्शास्त्रानुसारिणीं च । ४. वृत्तमुक्तावळीं — वर्तुलमुक्ताहारं, लक्ष्मीस्तोत्रात्मकवृत्तलक्षणाभिव्यञ्जिकां कृतिमपीत्यर्थः ॥

१. सूतं मुनिम् — मात्स्यपुराणनारदीयपुराणान्तर्गतयोः यादवगिरिमाहात्म्यकथाभागयोः मात्स्यपुराणोक्तयादवगिरिमाहात्म्यं सूत-

सूतो महामुनिस्तेषां श्रुत्वा वचनमुत्तमम् ।
स्मरन् पुराणचरितं वक्तुमित्थं प्रचक्रमे ॥ ११ ॥

सनत्कुमारोदितमेव यस्य वृत्तं पुरा दीप्तिमदाह्वयाय ।
समाहितास्तच्छृणुत प्रसिद्धं क्षेत्रस्य तस्यामितवैभवस्य ॥ १२ ॥

पर्वतारिकलितां ककुभं तां वारुणीमनुचितां च विहाय ।
राजते यदुगिरिर्नितरां यो दक्षिणोत्तरविजृम्भितगात्रः ॥ १३ ॥

शरीरभूताखिलविष्टपेन वैकुण्ठदुग्धाब्धिनिकेतनेन ।
नारायणेनाध्युषितं चिरेण नारायणाद्रिं यमुदाहरन्ति ॥ १४ ॥

उत्तुङ्गशृङ्गान्तनिरुद्धमेघैर्मध्योल्लसद्विद्युदुपान्तभागैः ।
नभस्स्थलैर्नाकसदस्स्मरन्ति रमासखं यत्र समानशोभैः ॥ १५ ॥

यः पर्वतेन्द्रो भुजगप्रणद्धावलग्नकालागरुचन्दनद्रुः ।
निजोदरे निर्मितनित्यवासं दामोदरं दर्शयतीव दूरात् ॥ १६ ॥

यस्योन्नतिं समभिवीक्ष्य स कुम्भयोनि-
र्विन्ध्यं तमेव समुपागतमाशशङ्के ।
स्वापातिरेकशिथिलाङ्गतया प्रबुद्धय
तन्मन्तुशान्तिमधुना परियाचमानम् ॥ १७ ॥

तमधिवसत देशं तामसात्माप्रवेशं
कलिभयझषदाशं किल्बिषेध्माश्रयाशम् ।

---

मुनिनोक्तम् । तत्प्रथमप्रपञ्चेऽभिहितम् । नारदीयपुराणान्तर्गतकथा तु नारदेनोक्ता सा कथा द्वितीयप्रपञ्चादारभ्य वर्ण्यते । एतत्पुराणद्वयोक्तकथयोरपि श्रोतारं श्रीशौनकमेव द्वितीयप्रपञ्चे कथावक्तारमाकलय्य तन्मुखेन उभयपुराणान्तर्गतकथापि प्रोक्तेति सङ्गतिरत्र कृता । काशीखण्डादिषु प्रोक्तमेतत्पुण्यक्षेत्रमाहात्म्यमपि पञ्चमप्रपञ्चे प्रकटितं वर्तते ॥

परिहृतभवपाशं नित्ययुक्तेन्दिरेशं
निगममयनिवेशं निर्विशङ्कं मुनीशाः ॥ १८ ॥

ग॥ अन्यदस्य यदुभूधरनाम्ना यदभूत्प्रसिद्धिस्तदपि सावधानमवधारयत ॥ ॥ १९ ॥

ग॥ पुरा किल निजभुजपराक्रममदनिराकृतनिखिलसुरासुरे सकलजगदुपप्लवैककर्मण्यनिद्राणे रावणे रणे रामेण सदळं विदळितेऽपि कन्दळितेव कालान्तरे दोहदवशाद्विषवल्लरी शिशुपालप्रमुखेन पांसुलजनेन नृशंसावतंसेन कंसेन च संसृष्टा हिंसा संसाररुजेव जगत्त्रयमत्रासयत् ॥ ॥ २० ॥

शंसितुं तदथ कंसहिंसनं शार्ङ्गिणे सुरवतंसकैर्युतः ।
क्षीरनीरभिदधीशवाहनः क्षीरनीरनिधितीरमाययौ ॥ २१ ॥

धरापि गोरूपधरा दुरूढां धुरं सुरारातिजनांशभाजाम् ।
निवेदयन्ती निगमार्च्यपुंसे तमाससादाथ समं सुरौघैः ॥ २२ ॥

ग॥ तत्र भगवन्तमनन्तवैभवं तं स्तुतिशतैश्शतानन्दादयस्तदीयदयासादितनिजोदयास्सविस्तरमस्ताविषुः ॥ ॥ २३ ॥

तदानीं भगवान् वासुदेवः —

मञ्चं कञ्चित्कलशजलधौ कञ्चुकिप्रायमञ्चन्
सिञ्चन् चञ्चन्नळिननयनालोकनैस्सत्प्रपञ्चम् ।
किञ्चित्तेषां नयनसरणौ चञ्चरीकासितांशून्
मुञ्चन् पञ्चायुधपरिवृढैरञ्चितस्सञ्चचाल ॥ २४ ॥

मध्येऽम्भोधेर्मरकतमणिः किं प्लवच्छुक्तिसंस्थः
किंवोन्मीलद्विशदकमलान्तस्स्थितश्चञ्चरीकः ।
राकाचन्द्रे जनकसदनं संश्रिते वा कुरङ्गः
दृष्ट्वैवं तं फणिपतिशयं शङ्किताश्शङ्कराद्याः ॥ २५ ॥

गा॥ तदानीमस्फुटभगवद्यथार्थरूपाणामखिलनिलिम्पानां नीलच्छविमपि सुविशदं रमेशं दिदर्शयिषुस्तामरसासनस्सामरसाभिनन्दिनं पुनरपि समस्तावीत् ॥ ॥ २६ ॥

तदानीम् —

प्रसन्नमुखमण्डलः परिलसञ्चलत्कुण्डलः
फणामणिगणोद्गळत्किरणराजिनीराजितः ।
रमाकरसुमानितस्वचरणः पुराणः पुमा-
नशेषदिविषद्विलोचनपथातिथित्वं गतः ॥ २७ ॥

अथ निरीक्ष्य तदीयमहामहः परवशास्त्रिदशास्स्वकमाशयम् ।
गदितुमप्यधिशार्ङ्गि विसस्मरुः सदसि भीतियुता इव पण्डिताः ॥ २८ ॥

विदुषा विधिना निवेदितो भगवान् भक्तभयापहोऽवदत् ।
वसुदेववरं च पूरयन् वसुधाभारमहं हरामि च ॥ २९ ॥

इतीरितां वाचमतीव रम्यां सुधासमां तत्र सुधाशनास्ते ।
निशम्य जग्मुर्मुदितास्स्वलोकान् ! न निष्फला सत्सु कदापि याच्ञा ॥ ३० ॥

प्रथमं परवासुदेवनामाऽप्यथ शार्ङ्गी भुवि वासुदेवभावम् ।
अधिगन्तुमियेष लोकनाथः फणिनेताऽपि तदीयपूर्वजत्वम् ॥ ३१ ॥

तामष्टमीमपि तिथिं च तथा प्रसूतिं
श्रीदेवकीजठरतः समुपाश्रितस्सन् ।
पातुं सतां च कुलमप्यरिजीवसारं
शौरिः क्षितावववतार तथाऽद्भुताङ्गः ॥ ३२ ॥

तस्मिन् लोकैकनाथेऽवतरति धरणौ देवकीगर्भभारा-
त्साधूनां मङ्गळं यत्समभवदशुभं वैरभाजां तदेव ।

---

६. अष्टमीं तिथिमपि; तया— अष्टमीं प्रसूतिं च । ७. पातुं—सतां कुलं पातुं — रक्षितुं; अरिजीवसारं पातुं — तत्पानं कर्तुम् ॥

वामाक्षिस्पन्दनं यद्व्रजभुवि सुदृशां तच्च कंसादिकानां
निर्व्याजं चान्वभूवन् परमसुखममी साधवो दुर्हृदश्च ॥३३॥

ग॥ अथ वसुदेवोऽमुमप्राकृतशरीरमपि मानुषशिशुभूतं भगवन्तं श्रीकृष्णं तदीयाज्ञयैव नन्दगोकुलं प्रापयामास ॥ ॥ ३४ ॥

यशोदा भाग्यवत्तायां विजिग्ये देवकीमपि ।
या स्वस्तन्यप्रवृद्धस्य हरेः क्रीडास्समैक्षत ॥ ३५ ॥

ववृधे वसुदेवनन्दनोऽयं सह वैरेण स कंसपांसुलस्य ।
जननीजनकान्तरङ्गमुच्चैर्जनितानन्दतरङ्गमादधानः ॥ ३६ ॥

ग॥ अथापरिमेयगुणविभवमहिम्नः भगवतः लीलावतारमपि तं शिशुं कपटेन जिघांसुना कंसेन प्रेरिता परिव्राजिकेव श्रीकृष्णनामविनोद-लालसा प्रावृडिव विषदिग्धपयोधरा सुशर्मसेनेव गोकुलाभिमुखी पूतना समुपेत्य तं स्तन्यं पाययामास ॥ ॥ ३७ ॥

पूतनापातने तस्याः पय एवाप हेतुताम् ।
यत्पर्यायपदार्थो हि विषं हन्ति हृदि स्थितम् ॥ ३८ ॥

भुजगी कुरुते क्षीरं क्ष्वेळं हि परमारकम् ।
विपर्यासादियं क्ष्वेळं क्षीरं कृत्वा स्वयं हता ॥ ३९ ॥

शकटं निकटंगतं स डिम्भो विकटाटोपविजृम्भितोग्रनादम् ।
यमलोकपथे सहायभूतं तमकार्षीदतिखिन्नपूतनायाः ॥ ४० ॥

तृणावर्तमहागर्तपूर्तिकल्यमहीधरः ।
वत्सासुरासुमत्स्याशुभक्षणे वकचेष्टितः ॥ ४१ ॥

अघासुरमहामेघविघातोद्यत्समीरणः ।
धेनुकासुरधानुष्कच्छेदे तीक्ष्णासिधेनुका ॥ ४२ ॥

प्रलम्बरम्भास्तम्भस्य भेदे स्तम्बेरमाधिपः ।
शङ्खचूडाख्यदुष्पीडापरिहारविचक्षणः ॥ ४३ ॥

वृषभासुरदुर्वर्ष्मदृषदादळने पविः ।
केशिकौशिकशावस्य दिनेशांशुविजृम्भणम् ॥ ४४ ॥

व्योमभीमामयारम्भप्रमापणभिषग्वरः ।
माद्यत्कुवलयापीडकरिकेसरिविक्रमः ॥ ४५ ॥

चाणूरमुष्टिकादीनां प्राणवायुफणीश्वरः ।
कंसासुपांसुशमनप्रशस्तप्रावृडागमः ॥ ४६ ॥

नरकासुरनीहारनिवारणदिवाकरः ।
असुराणां निहन्ताऽसौ हरिरेवमशोभत ॥ ४७ ॥

कंसादयो जगति ते त्वसुरांशभाजोऽ-
प्यन्तश्च हन्त भगवन्तमपि द्विषन्तः ।
प्रापुस्सुरत्वममुना निहतास्तदैव
द्वेषोऽपि सत्सु रचितः सुखमेव सूते ॥ ४८ ॥

इति तेन हताः परेऽप्यसङ्ख्याः समुपेत्यापि सुरत्वमत्यलभ्यम् ।
त्रिदिवेऽनवकाशतस्सपक्षाः [8]निरयायैव रणं स्वयं वितेनुः ॥ ४९ ॥

ग॥ अथ शमितामितविमतसन्ततिर्वसुमती च विगतातुलभारतया जीर्णपर्णापगमेन वसन्तावसरवनराजिरिव मुदमनवधिमधिगतवती ॥

इति यदुकुलनाथः श्रीहरिः पाण्डवानां
हृदयनळिनहंसो वल्लभो वल्लवीनाम् ।

---

८. निरयायैव– नरकायैवेति विरोधे निलयायेति विरोधपरिहार-पक्षे–रलयोरभेदः ॥

अतिगतनरलीलां दर्शयंश्चित्रवृत्तैः
चिरमनुबुभुजेऽसौ रुक्मिणीसत्यभामे ॥ ५१ ॥

सभां गतौ श्रीबलरामकृष्णौ सामाजिकान् जातुचिदूचतुस्तौ ।
अरातिना तेन जरासुतेन पराजितौ मानुषनिर्विशेषौ ॥ ५२ ॥

ग॥ भो भोस्सभ्यास्तावदभ्यर्हतां भवतां विदितमेव ननु यदस्मद्विरोधिना जरासन्धेन परिक्लेशितावावामिति तदधुना तस्य विमतस्य शमने समयः पुरुषविशेषश्च प्रतिपालनीयः । यतः — ॥ ५३ ॥

पत्नी गङ्गा सूनुरिन्दुः पयोधेस्तौ द्वौ मौळिं शङ्करस्याधिरूढौ ।
पारावारो नारुरोहासमर्थस्सर्वस्सर्वं नैव शक्नोति कर्तुम् ॥ ५४ ॥

ग॥ अतः कञ्चनकालं निरुपप्लवदेशे निरुपद्रवं निवस्तुमस्ति मनसि नौ तर्ष इति ॥ ॥ ५५ ॥

इति युक्तियुक्तवचनैस्सभासदो निजमायया च विरचय्य मोहितान् ।
ययतुर्द्रुतं सपदि दक्षिणां दिशं प्रति नीलपीतवसनौ सनातनौ ॥ ५६ ॥

ग॥ अथ तावनुसृत्य तदीयावरोधोऽप्यनवरोध एव मधुरां प्रविहाय निर्जगाम ॥ ॥ ५७ ॥

नानादेशान्विपुलविपिनान्युन्नतान् पर्वतांश्च
स्वच्छान् कच्छान्मधुरसलिलाश्चापगाः कूपभागान् ।
रम्याण्यन्यान्यतिकुतुकिनौ वीक्षमाणौ समन्तात्
क्षैणेनैतौ सहविविशतुस्सह्यशैलस्य सानुम् ॥ ५८ ॥

प्राच्यान्तु सह्यस्य महीधरस्य कवेरजायाः दिशि चाप्युदीच्याम् ।
विराजमानो गिरिराल्लुलोके गोमन्तनामा गगनोपगूढः ॥ ५९ ॥

अथ तस्य सानुभुवि सौधसुन्दरं करवीरनामपुरमापतुश्शनैः ।
यदुदारसम्पदवलोकनेन साप्यमरावती न मनसे स्म रोचते ॥ ६० ॥

यस्मिन् गीतिविलासाद्वनितारदनावळेस्समुत्पन्ना ।
रचयति कान्तिश्शशिनश्शोभाशङ्कां विलोकयताम् ॥ ६१ ॥

विकचकुमुदजाले यत्र रात्रौ तरुण्यः
शिशिरजलतटाके चन्द्रकान्तोपलाढ्ये ।
अनुसृतपतियुक्ताः गानलोलाश्चरन्त्यो
दिविचरतरुणीनां काममुत्पादयन्ति ॥ ६२ ॥

यस्मिन निशासु मुकुरावृतसुप्तिगेहे
सुप्ताः पुनर्दिनमुखे शयनात्प्रबुद्धाः ।
तस्माद्गृहात्परिचितादपि वामनेत्राः
गन्तुं त्वदृष्टसुपथास्सुचिरं चरन्ति ॥ ६३ ॥

स्त्रीणामलक्तरसरञ्जितपादपद्मं
संवीक्ष्य तन्मधुररूपहृतस्वचेताः ।
ध्यायंस्तदेव सततं हृदि यत्र सूर्यः
ताद्रूप्यमेव भजते बत रक्तपादः ॥ ६४ ॥

वधूजनो यत्र पुरे विभाति कुचेलसद्रत्नमनोज्ञमूर्तिः ।
निरन्तरोत्पादितपुष्पधन्वा रामाभिधानोऽपि च कृष्णवृत्तः ॥ ६५ ॥

तत्र पौण्ड्रकसहायपोषितं राक्षसं मुसलचक्रधारिणौ ।
वीक्ष्य तावथ सृगालनामकं विस्मयं हृदि भृशं समापतुः ॥ ६६ ॥

जग्धोच्छिष्टामिषकवलनासक्तफेरूपगीतं
गृध्रध्वाङ्क्षभ्रमणरचितस्वातपत्राणकृत्यम् ।

---

९. कुचेल एव सतां रत्नम्; तस्य मनोज्ञमूर्तिः । कुचे—स्तने, लसद्रत्नमनोज्ञमूर्तिः ॥

दुर्गे कुत्राप्यपगतभयं तं विलीनं नराशं
शङ्खध्वानैः श्रवणदलनैर्बोधयामास कृष्णः ॥ ६७ ॥

ग॥ अथ सङ्कर्षणानुजशङ्खरवसमाकर्णनेनाङ्कुरितातङ्कःपङ्किलमनास्स सृगालोऽप्यविलम्बितमेव निजावासकन्दरान्तरमपहाय— ॥ ६८ ॥

करालदंष्ट्राक्षिभयङ्करो रिपुर्निपत्य कल्पान्तककल्पकोपभाक् ।
निजाट्टहासेन न केवलं भुवं हरेश्च चित्तं समकम्पयद्भृशम् ॥ ६९ ॥

वैनतेयफणिनोर्यथा यथा केसरीन्द्रमदमत्तदन्तिनोः ।
देवकीसुतसृगालयोस्तथा सङ्गरस्समभवद्भयङ्करः ॥ ७० ॥

अथ कृष्णमुष्टिपतनेन दानवस्स सृगाल उष्णमसृगुद्वमन् मुखात् ।
पृथुलेन नीलवपुषाऽपतत्क्षितावणुना तथाऽसुमरुतोत्पपात च ॥ ७१ ॥

पौराणां नयनजलैः प्रमोदजैस्तद्रक्षोऽसृक्तिमिततलं पुरं प्रमृज्य ।
सङ्कीर्णा कुसुमपताकतोरणैस्सा राज्यश्रीर्यदुपतिबाहुमेव भेजे ॥ ७२ ॥

दृष्ट्वा पुरीं विविधतोरणपङ्क्तिचित्रां वामेक्षणाध्युषितसौधतलातिरम्याम् ।
शृङ्गारकेळिरसिकौ बलरामकृष्णौ तत्रैव तौ न्यवसतां सह यौवतेन ॥

कदाचित्क्रीडाद्रौ नववनलतामण्डपतले
प्रसूनैस्सामोदैः परिकलितशय्यामधिगतौ ।
अळीनां झङ्कारैरनुकृतवधूगीतिविवशौ
दिनान्ते तोयाक्तं जगृहतुरमू मन्दपवनम् ॥ ७४ ॥

दीपैस्तारकिते वधूमुखनिशानाथैस्सनाथीकृते
तद्दन्तद्युतिकौमुदीपरिवृते शक्राश्मनीलोत्पले ।
शुद्धान्ताह्वयमध्यरात्रिसमये नारीभिरालिङ्गितः
संमोदेन चरंश्चकोरचरितं चक्रे कदाचिद्धरिः ॥ ७५ ॥

प्रातः कदाचिदधिरूढवियत्प्रदेशे
भानौ शिताभ्रपरियोजितकुङ्कुमायाम् ।
कल्हारपुष्पयुतनिष्कुटदीर्घिकायां
चक्रे बलोऽपि जलकेळिमिव द्विपेन्द्रः ॥ ७६ ॥

कदाचिड्डोलासु क्वणितमणिघण्टासु विहरन्
कदाचित्सङ्गीते पुनरथ कदाचिन्मधुरसे ।
कदाचिद्रम्भोरुप्रणयकलहेषु प्रमुदितो
रमेशोऽसौ कालं सह हलधरेणैवमनयत् ॥ ७७ ॥

एवममू पुरि तत्र वसन्तौ कञ्चनकालमथो बलवन्तौ ।
तं गिरिमागमतां यदुनाथौ पौरजनैरखिलैरनुयातौ ॥ ७८ ॥

विविधनिर्झरकन्दरमन्दिरस्सुमफलानतशाखिलताञ्चितः ।
स गिरिरेव निवासकृते ततस्सकलपौरजनैः परिकल्पितः ॥ ७९ ॥

एवं क्रमाद्यादववंशजातास्समेत्य गोमन्तममुं गिरीन्द्रम् ।
अभ्यर्चयन्तो नळिनायताक्षं नारायणं वासमिहैव चक्रुः ॥ ८० ॥

तदाप्रभृत्यत्र महीधरोऽयं भाति प्रसिद्धो यदुशैलनाम्ना ।
अमुं भवन्तस्समुपेत्य शैलं श्रीयादवं पुण्यतमं वसन्तु ॥ ८१ ॥

इतिताननुशास्य मुनीन् भगवान् स तु सूतमुनिर्विरराम परम् ।
न तु शौनकमुख्यमुनीन्द्रगणः परितोषजयध्वनिपूर्णमुखः ॥ ८२ ॥

इति श्रीयदुशैलनिवासिना जग्गु-शिङ्गरार्येण विरचिते
श्रीयदुशैलचम्पूप्रबन्धे
प्रथमः प्रपञ्चः



॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

## द्वितीयप्रपञ्चः

व्याहृत्य सूतमुनिरेवमवोचदेतदन्यत्र
नारदमुखाच्छ्रुतवान् पुरा यः ।
श्रीशौनको विजयते भवतां समूहे
पूज्यस्स एष मणिगर्भ इवाम्बुराशिः ॥ १ ॥

ग॥ इति गदितवति भगवति सूते प्रयाते तदीयभाषितानुसारमपरे तपोधनास्तमेव शौनकममेयकथाविषयज्ञं मन्वानास्सभक्त्युन्मेषमभ्यनन्दन् ॥ ॥ २ ॥

श्रुत्वा किञ्चिद्यदुशिखरिणो वैभवं सूतवक्त्रा-
त्पूतात्मानः पुनरपि कथां श्रोतुकामाः पवित्राम् ।
तस्मिन्नद्रौ कथमुदभवत्केनवाऽऽराधितोऽसौ
श्रीशः किंवा चरितमितरच्चेत्यपृच्छंस्तमेव ॥ ३ ॥

ग॥ अथ शौनकोऽपि श्रुतपूर्वं विश्रुतयदुशैलचरितं यथाक्रमं वक्तुमुपाक्रमत ॥ ॥ ४ ॥

व्यासादयो वदरिकाश्रममेत्य पूर्वं
नारायणं च नरमप्यभिवाद्य भक्त्या ।
आकर्णयन् यदुगिरेः प्रथितं प्रभावं
सङ्क्षेपतो हरिमुखाम्बुरुहात्प्रवृत्तम् ॥ ५ ॥

ग॥ तस्मिन्नवसरे चिरसञ्चितसुकृतपरम्परैकसुलभायां तथाविध-श्रवणसुधारससपीतिकेळ्यामहमपि तेषां सपङ्क्तिमधिगतवानभवम् ॥

सनत्कुमारः परमेष्ठिसूक्तैः प्रबोधितो नारदमाह सर्वम् ।
सविस्तरं वक्ति स वैणिकर्षिरिति ब्रुवन् सोऽन्तरधान्मुकुन्दः ॥ ७ ॥

अथ स भगवदुक्तेर्वश्यतां विष्टपानां
प्रकटयितुमिव द्राक्सत्यलोकं विहाय ।
हरिचरणनमस्यातत्परस्तत्र वीणा-
रसरसिकमुनीन्द्रस्तत्पुरः प्रादुरासीत् ॥ ८ ॥

प्रणम्य भक्त्या मुनयो मुनीन्द्रं तं नारदं ते कुशलानुयोगम् ।
विधाय नारायणशासनं तद्व्यजिज्ञपन् ज्ञानधनाय तस्मै ॥ ९ ॥

ग॥ तदनु सुरमुनिवरस्सोऽपि सरसिजासनेन सनत्कुमाराय प्रथमं प्रणिगदितमथ स्वेन च सनत्कुमारमुखादवकर्णितमितिहासं कथयितु-ममितकुतूहलस्सन् — ॥ १० ॥

नारदो नीरदस्तोमगम्भीरनिनदेन तान् ।
[1]शिखिनः कर्तुमारेभे [2]शिखिसन्निभवर्चसः ॥ ११ ॥

सृष्टेः पूर्वमभूदशेषजगती गाढान्धकारावृता
पाषाणाद्यविशेषजीवनिचयैस्सन्त्यक्तभोगैर्युता ।
तत्काले भगवान् कयाऽपि दययैवोद्धर्तुकामश्चित-
स्सङ्कल्पेन ससर्ज तैश्च करणैरण्डान्यखण्डानि सः ॥ १२ ॥

मध्येऽम्बुराशि श्वसनाशनेशशय्यामधिष्ठाय सुखं शयाळोः ।
नारायणस्याजनि नाभिपद्माच्चतुर्मुखश्चारुमुखः कुमारः ॥ १३ ॥

---

१. मयूरान्– नृत्यासक्तान्. २. अग्निसदृशतेजस्कान् ॥

प्रणवं तदर्थमुपदिश्य सूनवे प्रथमं श्रुतीश्च सकलास्ततःपरम् ।
मनुमष्टवर्णमपि सार्थमादराददिशद्धरिर्भुवनसर्गसाधकम् ॥ १४ ॥

ब्रह्माऽपि ब्रह्म परममित्थमित्यविदन्नपि ।
सर्वज्ञोऽभूद्यतस्तस्मिन्नित्थन्ताज्ञानतोऽज्ञता ॥ १५ ॥

ससर्ज सोऽपि पद्मभूर्जगन्ति पण्डितस्ततो
जनार्दनाज्ञया चराचरात्मकानि निर्ममः ।
अजायतात्मजोऽप्यजस्य तस्य शङ्कराभिधः
पितामहद्वयेऽपि पूर्णभक्तिमांस्त्रिलोचनः ॥ १६ ॥

सृष्टिपालनसंहारकारणं हरिरेव सः ।
ब्रह्मा विष्णुर्हरश्चासीद्रजस्सत्त्वतमोगुणैः ॥ १७ ॥

दक्षादिभिस्सूनुभिरञ्चितस्ततो विरिञ्चनोऽर्चाकृतिमार्चितुं हरिम् ।
सम्प्रार्थयामास समाधिमास्थितो जगन्निदानं जनकं जनार्दनम् ॥ १८ ॥

अथ स वरदः श्रीमान् नारायणो मुदितः परं
द्रुहिणतपसा तस्मै प्रादान्निजाकृतिमार्चितुम् ।
परमपदतः प्राप्तं दीपात्प्रदीपमिवापरं
सरसिजभवः श्रीशं लब्ध्वा भृशं मुमुदे हृदि ॥ १९ ॥

ग॥ अथ विविधपटुपटहपणवदुन्दुभिवीणावेणुप्रमुखदिव्यचतुर्विध-वाद्यमधुररवानुगतवेदघोषोपबृंहितबृन्दारकवन्दिबृन्दानुसन्धीयमाननाना-विधासाधारणनारायणबिरुदगीतिरवस्य च केतनगतसुवर्णसवर्णसुपर्ण-

---

३. चतुर्मुखोऽपि "परं ब्रह्म एवं प्रकारकमित्यजानन्नपि सर्वज्ञोऽभूत्, यतः तस्मिन् परब्रह्मणि इत्थन्ताज्ञानेनैवाज्ञत्वम् । यस्यामतं तस्य मतमित्यादिश्रुतेः ॥

वपुःप्रभाधारापरम्पराभिरिव मूर्तिमतीभिस्समन्ततस्सञ्चलद्दिव्यकञ्चुकि-
प्रपञ्चकरचञ्चत्कार्तस्वरवेत्रलताभिरभिहतानामिवाभितस्समभिधावतामा-
तपत्राणफणिफणामणिगणकिरणानामपहरणचणायाः नारायणदिव्यविमान-
सुषमायाश्च सकलदिगन्तप्रथमाक्रमणकदने समुज्जृम्भमाणे स्वयम्भूरयं
व्योमयानं नारायणीयमानीय सभक्तिप्रकर्षं दिव्यमहर्षिजनहर्षजयघोष-
दन्तुरिते सत्यलोके स्थापयित्वा सह सनकसनन्दनसनत्कुमारादिभिः
कुमारैर्युगानामयुतं भगवन्तमाराधयामास ॥ ॥ २० ॥

अयुतमपि युगानामर्चयन्निन्दिरेशं
नियतमतिरतन्द्रो युक्तकालेषु भक्त्या ।
निमिषमिव निनायाम्भोजभूस्सर्वकालं
जगदभिमतलाभे वेत्ति किं कालदैर्घ्यम् ॥ २१ ॥

एवं स्थिते जातु विधातृसूनुस्सनत्कुमारः पितरं प्रणम्य ।
करद्वयं स्वं वचनं च पश्चात्कृपारसोत्पादकमाबबन्ध ॥ २२ ॥

स्वामिन्नहं तव सुतोऽस्मि कृपातिरेक-
पात्रीकृतेषु तव शिष्यगणेषु चैकः ।
तत्प्रार्थनाक्षरसुमैर्भवदङ्घ्रियुग्मे
विज्ञापनार्चनकृते प्रतिपालयामि ॥ २३ ॥

हितमेव पिता करोति नित्यं तनयानां सदुदर्कमिच्छुरुच्चैः ।
जननी तु परं प्रियैषिणी स्याद्भगवन्मे तनुते भवान् द्वयं च ॥ २४ ॥

बहुपुत्रवानपि पिताऽनुरज्यते समदृष्टिरेव सकलेषु सूनुषु ।
प्रथमात्मजे पुनरयं विशेषतः प्रणयस्स्वभाव इति लोकसम्मतिः॥२५॥

प्रथमस्तव शिष्येषु पुत्रेषु भगवन्नहम् ।
नारायणस्य करुणानिलयस्य भवानिव ॥ २६ ॥

क्लेशमप्यात्मनो नैव वेत्ति पुत्रहिते रतः ।
पुत्राभ्युदयमालोक्य प्रायशो मोदते पिता ॥ २७ ॥

तस्मात्प्रियतमं चापि तव तात विशेषतः ।
वाञ्छितं मे कृपापूर्णो दातुमर्हसि याचितः ॥ २ ॥

याचे या चेतसे सौख्यं ददाति परदेवता ।
भवताऽऽराधितां तात तामहं कोमलाकृतिम् ॥ २९ ॥

इति तनयवचो निशम्य वेधाः हरिविरहेण सुतस्य चापि भक्त्या ।
मनसि स निदधे नितान्तचिन्तां मुदमपि सागरवद्विधुं सुधां च ॥ ४० ॥

तमवददथ वेधसं रमेशः श्रितजनशोकनिवारणैकदीक्षः ।
तव तनयतृषं प्रपूरय त्वं हृदयभवं मम मामसुं गृहाण ॥ ३१ ॥

ग॥ एवमभिधायाविरोधेनैव सकलभक्तजनमनोरथनिर्वहणनिपुणे नारायणे मणिदर्पणात्प्रतिबिम्बं सशरीरमिव निजहृदयसमुद्भवमपरमिळानीळाकमलामहिळाभिरविरहितं स्वविरहचकितचेतसे वेधसे वितरति स चतुराननोऽपि विनयावनताय तनयाय परपदतः प्राप्तामात्मनाऽऽराधितां परदेवतां तां सप्रमोदं प्रददौ ॥ ॥ ३२ ॥

निधिमिव निरपायं दुर्विधो दैवयोगा-
दमृतकरमिवेन्दोः काङ्क्षितं वा चकोरः ।
परमथ मुमुदेऽसौ प्राप्य पद्मासहायं
सरसिजभवपुत्रस्सारभूतं श्रुतीनाम् ॥ ३३ ॥

अभिमतफलप्राप्त्या हृष्टं सुतं चतुराननः
चतुरधिषणं प्रीत्या चेत्थं पुनस्समभाषत ।
अयि सुत भुवो भागे सह्यस्य पूर्वदिशि स्थिते
विहरतु गिरौ लक्ष्म्या साकं हरिर्भवताऽर्चितः ॥ ३४ ॥

तस्माद्भवान् विष्णुविमानमेनं निवेश्य तद्भूमिधरेऽर्चयन् सन् ।
निमेषिचक्षूंषि नृणां करोतु श्रीशावलोकादनिमेषवन्ति ॥ ३६ ॥

इति वचनमसौ निशम्य धातुस्तनयवरोऽप्यवदत्सनत्कुमारः ।
गुरुभिरभिहितं कृपावशाद्यत्सुममिव तच्छिरसा धृतं मयेति ॥

आदाय माधवविमानममुं महान्तं तादृक्समस्तपरिवारवरैरुपेतम् ।
कैलासभूधरपथेन सनत्कुमारस्सम्प्रापयद्बदरिकाश्रमभूमिभागम् ॥ ३७ ॥

ग॥ एवं पुरहरपुरन्दरप्रमुखसकलसुरवरानुगतमखिलपरिवारपरिवृतं भगवतो विमानं तपोधनरूपिणौ नरनारायणौ दिनत्रयं तत्रैव निजाश्रमे सप्रश्रयं समभ्यर्च्य पुनः प्रस्थापयामासतुः ॥ ॥ ३८ ॥

आसाद्य दक्षिणदिशामथ धातृसूनुः
तैस्तैर्विरिञ्चकथितैः प्रथितैश्च चिह्नैः ।
सोऽयं महीभृदिति तं हृदि निश्चिकाय
प्राप्यापि दक्षिणदिशं सकलोत्तरो यः ॥ ३९ ॥

यद्योजनानां किल पञ्चलक्षप्रमाणवद्धातृगृहे विमानम् ।
तदेव तद्भूमिधरं गतं सत् प्रमाणवत्पूरुषपञ्चकस्य ॥ ४० ॥

सञ्चुकोच भगवानपि तस्मिन्नेकपूरुषसमानशरीरः ।
हर्षपुष्टमुनिमानवदेहाः प्रापिताः किमु तदङ्गमहत्त्वम् ॥ ४१ ॥

वृद्ध्या सन्तो जगदुपकृतिं कुर्वते यद्वदेव
ह्रासेनापि स्वयमनुपदं तद्वदेवेति वक्तुम् ।
श्रीशः पूर्वं बलिनृपसवे सम्प्रवृद्धस्तथाऽभू-
दर्चामूर्तिस्त्विह समकुचल्लोकरक्षार्थमेव ॥ ४२ ॥

ग॥ तथाभूतभगवत्तनिमरूपमहामहिमावलोकनात्सम्प्रहृष्टसकलतपोधनसुधाशनमानवप्रभृतिभिः परिवृतस्स सनत्कुमारोऽपि — ॥ ४३ ॥

3

मध्येमहीध्रशिखरं भगवद्विमानं
तत्राथ पूर्वककुभोऽभिमुखं विधिज्ञः ।
संस्थाप्य च प्रथितफाल्गुनपूर्णिमायां
तं पाञ्चरात्रविधिना हरिमारराध ॥ ४४ ॥

ततो हरिविमानस्य समीपे किञ्चिदुत्तरे ।
तीर्थं किमपि तत्रत्यमुनीनां ददृशे पुरः ॥ ४५ ॥

यत्तीर्थं किटिरूपिणो भगवतस्सिन्धूत्थितस्याङ्गजं
गङ्गाया अपि पाथसो बहुगुणं यस्या महत्त्वं विदुः ।
दृष्ट्वां तां सरसीमियं त्रिजगतां कल्याणहेतुस्ततः
कल्याणीति समाजुहाव किल तां नाम्ना मुनीनां गणः ॥ ४६ ॥

तत्रैवमानन्दमयाभिधानविमानमध्ये स्थितमच्युतं तम् ।
प्रणम्य देवाः प्रययुस्स्वलोकान् हरिं तदाज्ञां हृदि मूर्ध्नि कृत्वा ॥

यः कालो दिनरात्रिमासशरदाद्युत्पन्नभेदोऽनिशं
भूयोऽप्येति तथाऽपि यं न लभते नीतं तु यत्नैरपि ।
सर्वाधारतया यमाहुरवधिर्नास्त्येव यस्येशव-
त्तन्द्रालोर्विफलः फलीकृतिमतां योऽनन्तमूल्यात्मकः ॥ ४८ ॥

तथा सङ्ख्याविहीनेऽपि काले महति तादृशे ।
सङ्ख्यातान् कतिचित्कालांस्तत्रानयदजात्मजः ॥ ४९ ॥

एवमेव वर्तमाने —

विप्रः कश्चन कुत्रचित्सुचरितो नाम्ना च वृत्त्याऽप्यभू-
द्भार्या भर्तृपरायणाऽस्य सुमुखी चासीत्सुशीलाभिधा ।
तत्पुत्रौ गुणिनौ सुवृत्तिसुमती नामाप्यभूतामसौ
नित्यं विष्णुपरः कुटुम्बसहितो यात्राभिलाषी ययौ ॥५०॥

श्रीकूर्मसिंहाचलपाण्डुरङ्गगोकर्णसाकेतपुरस्सराणि ।
श्रीरङ्गकाञ्चीमधुराऽहिशैलमुख्यानि पुण्यायतनानि भेजे ॥ ५१ ॥

कावेरीं तां तुङ्गभद्रां शतद्रुं शोणां कृष्णां ताम्रपर्णीं च रेवाम् ।
पूतं सेतुं गौतमीं गोमतीं चाप्यन्याः पुण्यह्लादिनीः प्राप विप्रः ॥

एवं पुण्यक्षेत्रतीर्थानि गत्वा नायाद्विप्रो यादवाद्रिं कदाऽपि ।
स्नानं चक्रे नैव कल्याणतीर्थे कल्याणानां हेतुभूतं यदेव ॥ ५३ ॥

ग॥ इति चिरतरं बहुविधरमाधवसुन्दरमन्दिरसिन्धुवरादिभिः परमपावनमवनीतलमखिलनिजपरिजनपरिवृतः परमभक्तिभरेण पर्यटन् कदाचित् — ॥ ५४ ॥

गङ्गासरिन्माधवपादपद्मसङ्गात्पवित्राऽन्यतरङ्गिणीभ्यः ।
भङ्गान्यदीयानवगाह्य लोका भङ्गं भजन्ते निजपातकानाम् ॥

ततो नदीं तामवगाह्य सर्वे वयं कृतार्थास्सुचिराद्भवाम ।
इत्थं समालोच्य ययौ कदाचिद्गङ्गां स विप्रस्सकुटुम्ब एव ॥ ५६ ॥

उल्लङ्घ्य कल्याणपयो यतोऽसौ समागतो भूमिसुरोऽनभिज्ञः ।
गङ्गा ततस्सा निजपूर्णपूरैः पुरोगताऽप्यस्य तिरोहिताऽभूत् ॥

अस्मद्भर्तुरुपेत्य हन्त जठरं पीडां भृशं बाडवो
नित्यं सन्तनुतेऽस्य दृष्टिविषया माभूवमेवाधुना ।
इत्थं सागरराजपट्टमहिषी तद्बाडवत्वासहा
नूनं तस्य महीसुरस्य नयनासङ्गं न गङ्गाऽकरोत् ॥ ५८ ॥

विष्णोः पदात्सञ्जनितेयमासीत्पुरा श्रुता विष्णुपदीति नाम्ना ।
अदृश्यतामेत्य च तत्पुरोऽद्य गङ्गानदी [4]विष्णुपदीबभूव ॥ ५९ ॥

---

४. विष्णुपदीबभूव— अविष्णुपदं विष्णुपदं सम्पद्यमानं बभूव; विष्णुपदीबभूव । आकाशमिवादृश्यमासीदित्यर्थः ॥

ग।। तदानीमवनीनिलिम्पोऽयं निलिम्पापगां समीपगानध्वगान्परिपृच्छ्य तदीयभाषितर्विदितत्रिपथगापुरस्स्थितिरपि स्थिरतरदुरितनिहतस्सुरपुरीमिवानधिगच्छन् उच्छृङ्खलचिन्ताविह्वलः प्रह्ववदनस्त्रिदशधुनीमेव सविनयमनुनयन्नित्थमभ्यर्थयामास ॥ ॥ ६० ॥

त्रिविक्रमपदोदये त्रिपुरजिज्जटोपाश्रये
समूलहृतनारके सगरपुत्रसन्तारिके ।
सरिद्दयितवल्लभे सुदृढपाप्मनां दुर्लभे
प्रकाशय हताशये मयि दयां पयस्स्रोतसा ॥ ६१ ॥

कावा कुलोद्धृतिकरी भवतीव लोके
भस्मीकृतान् ऋषिरुषा पतितानधोऽधः ।
पाताळतस्समनयश्श्वशुरानशेषा-
न्नाकाङ्गणं सपदि सागरराजकान्ते ॥ ६२ ॥

गङ्गे त्वमभ्रमहिता प्रथिताऽप्यदभ्रं
पूर्वं प्रपूर्णकरुणा धरणीमुपेत्य ।
अस्मादृशां भ्रमवतां हितमाचरन्ती
भ्रान्तं तवापि सविधे किमुपेक्षसे माम् ॥ ६३ ॥

तादृशं तदनु दैन्यभाषितं भूसुरस्य सुरसिन्धुसुन्दरी ।
श्रोत्रवर्त्मनि निजे चकार तन्नेत्रवर्त्मनि तु कन्यकाऽऽकृतिम् ॥ ६४ ॥

शैवालालकमञ्जुळा चलझषस्मेरेक्षणाऽऽवर्तभू-
नाभिस्तामरसानना सितगरुन्मन्दस्मितोद्भासिनी ।

---

५. पूर्वं अभ्रमहिता; अभ्रे—आकाशे महिता। अभ्रमाणां भ्रमरहितानां हिता च ॥

वीचीनीविमती बृहत्पुलिनभूराजन्नितम्बस्थली
कन्या काऽपि महीसुरेण ददृशे स्वच्छप्रतीकच्छविः ॥ ६५ ॥

यमुनाऽप्यमुया समं समायादसिताङ्गी सदृशाकृतिर्वयस्या ।
स च ते अवलोक्य मूर्तिमत्यौ तनुकान्ती हलिकृष्णयोरमंस्त ॥

ग॥ अवदच्च तया कन्यया जाह्नव्या परिपृष्टशोकनिमित्तस्सुचरितस्सुरसरिदनवलोकनकारणमात्मनः पापपरिपाकं निमित्तीकृत्य समुत्पन्नां मनोवेदनाम् — ॥ ६७ ॥

कन्या ततो ब्राह्मणमित्थमूचे न पापिनां दृक्पथमेति गङ्गा ।
अपेतभाग्यस्य पुरस्स्थिताऽपि सम्पद्यथा नापि दृगध्वनीना ॥

कन्यागिरेत्थं व्यथितः पुनस्तामुवाच विप्रः परिदीनचेताः ।
कावा परा रक्षति पातकेभ्यस्सिन्धुं विना माधवपादजाताम् ॥

ततोऽपनोद्याघततिं मदीयां सैवावतु स्वाश्रितमेनमज्ञम् ।
अस्मादृशानप्यपहाय तस्याः कृपा पुनः खेलति कुत्र पात्रे ॥ ७० ॥

एवंविधेन ब्राह्मणवचसा परितुष्टमानसा मन्दस्मितपुनरुक्तसितकान्तिपरंपरया निजस्रोतस्स्रुतिं तस्मै दयमाना प्रदर्शयन्तीव मधुरगिरा निजस्वरूपं कल्याणतीर्थोल्लङ्घनजनितं तदीयं दोषं च तन्निमित्तमात्मनस्तिरोधानमपि समभिधाय दयार्द्रहृदया स्रवन्तीरूपमपि प्रदर्श्य तत्राम्रेडितकल्याणंसरोनामा निमज्जेति तं ब्राह्मणमनुगृह्य तया वयस्यया समं तिरोदधे ॥ ॥ ७१ ॥

प्रहृष्टचेतास्सुरनिम्नगायां तस्यां ममज्जानुचरैरुपेतः ।
कल्याणतीर्थस्य जपन् स नाम तदोदमज्जद्यदुशैलतीर्थे ॥ ७२ ॥

स्वयं गङ्गाऽपि तं तादृक्सरस्वत्या सिषेच यत् ।
सैव कल्याणतीर्थत्वमपि प्रापेति नाद्भुतम् ॥ ७३ ॥

तत्रत्यविप्रैरवलोक्यमानस्सविस्मयैस्स्नानजपानुषक्तैः ।
ममज्ज चित्राम्बुनिधावगाधे तत्तीर्थमाहात्म्यमनुस्मरन् सः ॥७४॥

श्रुत्वा तैः कथितं प्रभावमथ तन्नारायणाद्रेर्भृशं
नत्वा श्रीशमनुप्लवैस्सह भजन् भक्त्याऽनिशं माधवम् ।
यावल्लब्धशरीरधारणपरो वेदान्तविद्यानिधि-
स्तत्रैव न्यवसच्चिरं प्रमुदितस्सन्त्यक्तचित्तोन्नतिः ॥ ७५ ॥

तृतीयस्तत्र पुत्रोऽभूत्तस्य नारायणाभिधः ।
बालः शशीव ववृधे पितुरभ्यधिको गुणैः ॥ ७६ ॥

ग॥ अथकदाचिदखिलमपि जनपदमपहृतविविधौषधिफलतरुनिवहमुपजनयन् सकलर्तूनपि निदाघसमयमिव विरचयन् परिशोषितसकलसरस्सरित्सलिलतया प्रतिपक्ष इव प्रचेतसः वैवस्वतलोक इव संतप्यमानजन्तुजातः नृशंसप्रभुरिव निरुद्धजीवनोद्विग्ननिखिलजनः पितृवणप्रदेश इव परिचितोष्मदारुणः महानवग्रहस्समजायत ॥ ७७ ॥

अमुं तदानीं गृहमेधिनं तत्सतीसुताः क्षुत्क्षुभिता नितान्तम् ।
तथा न्यरुन्धन् निजधृष्टता च यथाऽस्य चिन्तावशताऽप्यवेदि ॥

ग॥ अथ तथा शान्तात्माऽपि समदुःखसुखोऽपि निरीहोऽपि स विप्रस्सुचरितस्तथाविधदुर्भिक्षातिशयेन निजोपजीविजननिर्बन्धेन चात्मन आजन्माकिञ्चनतया च परिक्षुभितमनास्तत्र तत्र पर्यटन्नपि कालदोषादखिलैरप्यवज्ञातः पृथग्जन इव निजदारिद्र्यमेव सर्वदुःखनिदानं मन्यमानः तदेवानुचिन्तयन्नेवमशोचत् ॥ ॥ ७९ ॥

दारिद्र्य किं तव फलं मम पीडनेन
याच्ञ्याऽऽत्मजां यदसि दित्सदहो बलान्मे ।
मत्पाणिपीडनवती प्रथमं हि लज्जा
ते कन्यकां कथय सा सहते कथं वा ॥ ८० ॥

मयि विहर यथेच्छं रिक्तते नात्र दुःखं
गतजनुषि न दानं सत्सु क्लृप्तं मया यत् ।
कलयसि किल तत्किं सद्गुणानश्वशृङ्गं
न गणयति कुतो वा कोऽपि कुत्राप्यहो माम् ॥ ८१ ॥

मनस्स्थैर्ये तादृक्क्षितिभृदपि यस्माद्विनमितः
त्वया पीतो यस्माद्गुणजलनिधिश्चापि विपुलः ।
कृता [६]लोपामुद्रा यदविरहिता भूतिषु सुखे-
ष्वतो दारिद्र्यार्य त्वमपि समभूः कुम्भजमुनिः ॥ ८२ ॥

अनवाप्तकालजग्धेर्मम भारतरोचितात्मवृत्तेश्च ।
आकिञ्चन्य बत त्वं व्यासमुनित्वं ददासि बहुमान्यम् ॥

दारिद्र्य रे[७]फात्मक मामकीनां वाचं शृणु त्वं कृपयाऽद्य किञ्चित् ।
करोषि मां यत् किल [८]निर्धनाढ्यं तत्रापि रेफं हर मे शुभं स्यात् ॥

ग॥ इत्थमतिवेलं शोचन्तं पतिमनुशोचन्ती सुशीलाऽपि स्त्रीचापल्यसुलभेन वचसा दारिद्र्यवारणोनाम द्रमिडेश्वरो वाञ्छितादधिकप्रदातेति विश्रुतस्तद्दर्शनेनास्मद्दुर्दशा परिह्रियते तत्तमेव प्राप्य प्रार्थयेति सविनयं व्यजिज्ञपन्निजवल्लभम् ॥ ॥ ८५ ॥

ततो ययौ द्रविडपतिं निरीक्षितुं सतीवचोमुषितमतिर्महीसुरः ।
सुतावुभौ तमनुगतौ गतिश्रमात् स्रुतौ मुहुः स्खलितपदौ क्षुधातुरौ ॥

---

६. कुम्भजमुनिपक्षे–लोपामुद्रा भूतिषु सुखेषु च यत्-यस्मात् अविरहिता कृता । दारिद्र्यपक्षे तु– भूतिषु लोपाः, सुखेषु मुद्राः अविरहिताः कृताः ॥

७. रेफात्मक– कुत्सितस्वरूप, रवर्णपूर्ण । ८. निर्धनाढ्यं– धनरहितैः परिपूर्णं तत्रत्यरेफ हरणे निधनाढ्यमिति भवति ॥

ग॥ एवं क्रमादतिक्रम्य सरणिमायामिनीं द्रविडानासाद्य नगरनिवासदुःखेन राजदर्शनप्रतिपालनप्रयासेन च भगवदभ्यर्चनहानेनापि जुगुप्सितमना मनाक्केन दत्तं वित्तमादत्त ॥ ॥ ८७ ॥

ततः प्रयातः पथि चोरसङ्घैस्सन्ताडितो नष्टधनः श्रमार्तः ।
ताभ्यां सुताभ्यां पुनरायया स्वं पुरं त्रपावित्तभरावनम्रः ॥ ८८ ॥

तत्रान्तरे यदुगिरौ तनयस्तृतीयो
नारायणस्सुचरितस्य बहुक्षुधार्तः ।
उच्चैः रुदन् प्रसुवमन्नमयाचताग्रे
बाल्यं निजाभिलषितान्न परं हि वेत्ति ॥ ८९ ॥

मात्रा परिश्रमवशात्प्रतिपद्य कुत्रा-
प्यन्नं प्रदत्तमवलोक्य तदा स पात्रे ।
भोक्ष्ये कथं भगवते त्वनिवेदितं त-
दम्बेति मातरमपृच्छदुदारबुद्धिः ॥ ९० ॥

ग॥ इति वत्सवचनमाकर्ण्य पूर्णहर्षया सुशीलया शिशो त्वमेव श्रीशाय निवेदयेत्यावेदितो भगवतस्सदनमासाद्य सद्यस्तदन्नपात्रं रमाकलत्रस्य पुरतस्समर्प्य परमभक्त्या प्रणम्याविदितक्रमः भुङ्क्ष्व नारायणेति केवलं बालोऽयं मुहुस्साञ्जलिबन्धमयाचत ॥ ॥ ९१ ॥

यो ब्रह्मादिभिरादरादुपहृतं नैवेद्यमर्चाकृतिः
श्रीशः केवलमीक्षणेन सकलं गृह्णाति तृप्तस्सदा ।
सोऽयं बालकभक्तिबद्धमनसा स्वल्पं कदन्नं मुदा
निश्शेषं बुभुजे परत्वमपि तद्विस्मृत्य लक्ष्म्या सह ॥ ९२ ॥

भुक्तं श्रीपतिनाऽन्नमित्यतिमुदा गेहं गतस्सन्निधौ
मातुः पूर्ववदोदनार्थमरुदत्क्षुत्पीडया प्रेरितः ।

मात्रा कुत्र विनाशितं तदशनं मूढेति संक्रुद्धया
पृष्टस्सर्वमुवाच पुण्यचरितो वृत्तं हरेस्सन्निधौ ॥ ९३ ॥

श्रुत्वाऽस्य वाणीमवला तदन्नं भुक्तं बिडालादिभिरित्यवेत्य ।
भिक्षामटन् जीव सुतेति रोषात्पात्रं ददौ तस्य करे सुशीला ॥ ९४ ॥

मातुर्निदेशमपि तत्पात्रं च शिरसा वहन् ।
निर्विकारमनाः प्रायात् भिक्षां कर्तुं स बालकः ॥ ९५ ॥

यानि यानि सदनानि बालकः पात्रपाणिरगमत्तदाऽन्धसे ।
तेषु तेषु कमलाऽप्यपूरयत्तस्य पात्रमथ रत्नभिक्षया ॥ ९६ ॥

बालेन दत्तमुपभुज्य कदन्नमेषा तस्मै ददौ कथमहो बहुरत्नभिक्षाम् ।
किं सम्पदा स्वयमभेदवतीति हेतोः किं वा तथाविधकृपारसपूरितत्वात् ॥

रत्नाकरस्य तनया कर[9]पद्मरागरम्या च नित्यमपि व[10]ज्रकराभिवन्द्या ।
मु[11]क्तोपलालितपदा ह[12]रिवल्लभा सा भिक्षामदान्मणिमयीमिति नैव चित्रम् ॥

उत्पत्तिः कलशाम्बुधौ निवसतिः कारुण्यसिन्धोर्हरे-
र्दोर्मध्ये सहजन्मता सुविदिता यस्यास्सुधादीधितेः ।
आर्द्रांगांस्यपि चेतनस्य कुरुते या पत्युरग्रेऽन्यथा
सा श्रीः पूर्णदयात्मिका वितरति प्रायस्स्वयं प्रार्थितम् ॥

बहुमूल्यानि रत्नानि सिन्धुजा[13]तार्जितान्यतः ।
सन्धारयन्नयं [14]पोतोऽप्याजगाम शनैश्शनैः ॥ १०० ॥

---

९. करपद्मरागरम्या– करे विद्यमानपद्मस्य रागेण, पद्मरागरत्नेन च रम्या। १०. वज्रकराभिवन्द्या–वज्ररत्नोपायनेन, वज्रायुधधरेण देवेन्द्रेण च अभिवन्द्या। ११. मुक्तोपलालितपदा–मुक्ताफलैः, मुक्तजनैश्चोपलालित-पदा। १२. हरिवल्लभा– इन्द्रनीलमणिप्रिया, विष्णुपत्नी च ॥

१३. सिन्धुजातेन– समुद्रसमूहेन, सिन्धुजातायाः– रामायाः आर्जितानि। पोतः – नौः, बालकश्च ॥

4

शीर्षे पाणिद्वयसहकृते लोकमात्रा वितीर्णं
धृत्वा भारात्स्खलितचरणो मन्दमासाद्य गेहम् ।
दत्वा मात्रे पुनरपि तथा चोदितस्तर्षवत्या
भिक्षां चक्रे मुदितहृदयस्सप्तकृत्वस्तथैव ॥ १०१ ॥

पर्यायेत्वष्टमे साऽप्यदिशदथ रमा दिव्यभोज्यानि तस्मै
तान्यादायाऽगतं तं तनयमपि मुदा भोजयित्वाऽथ भुक्त्वा ।
जाग्रत्यां सर्वरात्रं तदवनकुतुकान्मोदवत्यां च तस्यां
भर्ताऽप्यायात्सुताभ्यां सह गृहमधिकक्षामकायस्तपस्वी ॥ १०२ ॥

दृष्ट्वा लज्जितया तया निगदितं वृत्तं निशम्याऽऽत्मनो
निन्दामात्मजशंसनं च बहुशः कुर्वन्नयं बाडवः ।
देवब्राह्मणपूजनेन सततं द्रव्यव्ययं कल्पयन्
सन्तुष्टोऽनुचरैस्समं समवसन्निर्व्याकुलो निर्ममः ॥ १०३ ॥

ग॥ एकदा तस्य स्वापतेयस्यापहरणाय दस्यवः कतिचन समासाद्य भूसुरवेषभासुराः कैतवेन कल्याणसरसि कृतमज्जनास्सज्जनाभिनयाः सुचरितेन संप्रार्थिताः तस्यावसथे कृतातिथ्याः तत्रत्यविप्रप्रभावेन भगवन्महिम्ना तत्सरोगुणगरिम्णा च कृतसत्त्वप्रकृतयः स्वनिकृतिं कृतनमस्कृतयस्समावेद्य सद्यस्सुचरितोपदेशोपगतप्रज्ञाः परां निर्वृतिमनुबभूवुः ॥
॥ १०४ ॥

इति श्रीयदुशैलनिवासिना जग्गु-शिङ्गरार्येण विरचिते
श्रीयदुशैलचम्पूप्रबन्धे
द्वितीयः प्रपञ्चः



॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

## तृतीयप्रपञ्चः

इत्याद्यं यदुशिखरीशितुश्चरित्रं
व्यासादीन्प्रति निजगाद नारदः सः ।
इत्युक्त्वा मुनिसदसे श्रुतावशेषं
प्रारेभे पुनरपि शौनकः प्रवक्तुम् ॥ १ ॥

यस्योत्पत्त्या रघुकुलमभूत्पावनं यच्छराणा-
मन्नप्राशस्त्वसुभिरभवत्तादृशस्ताटकायाः ।
विश्वामित्राध्वरपरिसमाप्तिश्च यद्दोः प्रभावात्
पादस्पर्शाद्दृषदपि वने योषिदासीद्यदीयात् ॥ २ ॥

ऐशं चापं जनकशुचमप्याशु भङ्क्त्वोपयेमे
यस्सीतां यो भृगुतनयदोर्दर्पसर्पाण्डजेशः ।
मातुर्वाक्याद्विपिनमविशज्जानकीलक्ष्मणाभ्यां
यो यद्बाणाः खरमुखमहाकोणपप्राणपानाः ॥ ३ ॥

कान्ताकामात्कनकहरिणं योऽन्वगाद्यो जटायो-
र्दिव्यान् लोकानदिशदगमत्सानुजो यश्च पम्पाम् ।
सुग्रीवोऽभूत्कपिरपि सुहृद्यस्य यो वालिहन्ता
क्रुद्धो यश्च स्वशरमपरं कुम्भजं कर्तुमैच्छत् ॥ ४ ॥

---

१. कुम्भजं— अगस्त्यमिव समुद्रशोषकम् ॥

यन्माहात्म्यात्प्लवति सलिले शैलसङ्घोऽपि येन
ध्वस्तश्शत्रुस्सहचरकुलैरावणो लोकशत्रुः ।
लङ्काराज्यं तदनुजवशे स्थापितं येन चाऽसीत्
साकेतेऽभूत्सुसुखमनुजैस्सीतया योऽभिषिक्तः ॥ ५ ॥

यस्मिन्नित्यं विनिहितमतिर्मारुतिर्नैच्छदन्य-
द्यस्याख्यानाऽमृतरसरुचिं वेत्ति बालेन्दुमौलिः ।
एकैकं वा दुरितहरणं यच्चरित्राक्षरं स्यात्
धत्ते साम्यं नवजलमुचः कायकान्तिर्यदीया ॥ ६ ॥

तस्मिन् श्रीरामचन्द्रे पितृवचनपरित्राणलक्ष्येण रक्ष-
स्सङ्घक्षोभं चिकीर्षौ विपिनभुवि तथा सञ्चरत्यादिपुंसि ।
वापीकुञ्जस्रवन्तीकुसुमफलभरानम्रनानाद्रुरम्यः
शैलेन्द्रोऽयं तदक्ष्णोः खगरुतिभिरिवाऽकारयन् लक्ष्यमासीत् ॥

आरुह्याद्रिं तस्य शृङ्गेऽथ दृष्ट्वा कासारं तं तत्र नारायणं च ।
हृष्टो रामो लक्ष्मणेनोपनीतैः पूजां चक्रे पूजनीयं पयोजैः ॥ ८ ॥

इति कतिचन मासांस्तत्र नीत्वाऽथ रामो
रहसि स समवोचि श्रीसहायेन तेन ।
अयि दशरथसूनो संश्रिते त्वय्ययोध्यां
तव सदनमुपैष्याम्यंशतोऽहं ममेति ॥ ९ ॥

ग॥ तादृशीं रमेशस्य नारायणस्य फणितिपीयूषस्रुतिं श्रवसा निपीय श्रीरामोऽप्यथ ततः प्रस्थाय— ॥ १० ॥

तथाऽऽशुगान् स्वान् पिशिताशसङ्घप्राणाशुगैस्संयति तर्पयित्वा ।
चतुर्दशातीत्य समास्समानी रामस्सजानिस्स्वपुरीं प्रपेदे ॥ ११ ॥

आत्माभिषेकमभिवीक्ष्य यियासवेऽथ
लङ्कां पुनस्स्वविरहाऽसहनाय तस्मै ।
भक्ताग्रगेष्वचरमाय विभीषणाय
स्वार्च्यं ददौ सपदि रङ्गपतिं स रामः ॥ १२ ॥

अथ रङ्गनाथसहितो विभीषणो निजराज्यमाप्तुमभवत्समुत्सुकः ।
परदैवतस्य विरहेण राघवो विषसाद ताद्दगतिधीरधीरपि ॥ १३ ॥

रामं ततस्समुपगम्य जगाद धाता
नारायणाद्रिशिखरे भवताऽर्चितो यः ।
तस्यांशजं स्वमहिळाभिरुपेतमेनं
नित्यं भजेति वितताार च तं मुकुन्दम् ॥ १४ ॥

वितीर्णमादाय हरिं विधात्रा विलोक्य वैकर्तनवंशवर्यः ।
नारायणाद्रावलोकितं तं देवं तदुक्तिं च तदाऽस्मरत्सः ॥ १५ ॥

आराधयन्नयं रामोऽप्यनेकानेहसस्ततः ।
साञ्जलावाञ्जनेयेऽदात्स्वप्रियं तं रमाप्रियम् ॥ १६ ॥

कुशाय पवनात्मजः पितृधनं तमर्चाकृतिं
रमापतिमुदारधीरथ वितीर्य रामप्रियम् ।
मुदा शिखरिशेखरं तमुपगम्य नारायण-
क्ष्माधरमुपार्चयन् हरिमुवास तत्रैव सः ॥ १७ ॥

सुता कनकमालिनी मुहुरनेकसंप्रार्थना-
वशादभिमतं कुशात्समुपलभ्य तद्दैवतम् ।
समेत्य यदुशेखराभिधमथो पतिं नित्यशो
रमापतिमुपाचरद्रमणदेवता मोदतः ॥ ॥ १८ ॥

क्रमेण यदुवंशेऽथ हलिना शौरिणाऽपि च ।
अभ्यर्चितः चिरं तस्थौ स च रामप्रियो हरिः ॥ १९ ॥

अर्चाकृतिर्द्रष्टुमिव प्रभेदं रामप्रियस्तद्विभवद्वयेऽपि ।
श्रीरामलीलां यदुवंशवृत्त्या श्रीकृष्णलीलामपि पश्यति स्म ॥

तदन्तरे क्षीरपयोनिधौ हरिं बलेः पिता दैत्यपतिर्विरोचनः ।
समर्चयन् योगविनिद्रितस्य तज्जहार विष्णोर्मकुटं दुराशयः ॥ २१ ॥

तदनु नष्टकिरीटममुं हरिं समवलोक्य परे परिचारकाः ।
शबलिताः भयविस्मयभङ्गिभिः प्रकृतिगन्धयुता इव रेजिरे ॥

विचार्य तेनैव विरोचनेन विलुण्ठितं स्वान्मकुटं विभोस्तत् ।
इत्थं विनिश्चित्य तदाप्तये ते व्यज्ञापयन् वेगगतिं खगेशम् ॥ २३ ॥

विनतातनयश्च चोदितस्तैः प्रणिपत्याच्युतपादपद्ममाशु ।
परिमार्गितुमन्वगाद्विषन्तं त्रिजगद्गोष्पदनिर्विशेषभावः ॥ २४ ॥

अरुणसहभवो रिपुं विचिन्वन् निखिलजगन्त्यपि पर्यटन् क्षणेन ।
कृपणधनमिव क्षितेरधस्तान्निभृतविलीनमरिं ददर्श धीरः ॥ २५ ॥

जन्यमन्योन्यमन्यूनमन्युनाऽनाप्तदैन्ययोः ।
तत्रेशित्रोरभूत्पत्रिदैत्यानां चित्रकर्मणोः ॥ २६ ॥

शिताग्रतुण्डेन पतत्रिनेतुः क्षतस्ततोऽरातिरसौ हताशः ।
मुक्त्वा महत्तन्मकुटं मनोज्ञं जङ्घाबलेनास्य जवं जिगाय ॥२७॥

ग॥ इत्थं विनिर्जिताद्विरोचनाद्वैनतेयोऽप्यनिरुद्धकिरीटमिदं विधुन्तुदाद्वियत्प्रदेशो विबुधास्वाद्यं विधुमण्डलमिवोपलभ्य रसातलमतीत्य मध्यमलोकाध्वना दुग्धाम्बुनिधिमधिगन्तुमभ्यगमत् ॥ ॥ २८ ॥

गच्छन् द्रुतं गगनसीम्नि ततो गरुत्मान् पक्षातिवेगपरिधूतपयोदतूलः ।
मेरुः किमेवमभिधावति सर्वलोकसंवीक्षणार्थमिति सर्वजनैर्व्यलोकि ॥

अपरस्तरणिर्जवातिरेकात्किमु जेतुं रविमुद्यतोऽन्तरिक्षे ।
परिधावति किं तटित्समूहस्थिरतामेत्य जनैरिति व्यतर्कि ॥ ३० ॥

बृन्दावने व्रजवधूभिरुपावृतं गो-
बृन्दावनच्छलपवित्रितकाननान्तम् ।
पर्यायबद्धशिखिपिञ्छकृतावतंसं
सेन्द्रायुधाम्बुदमिव प्रतिभासमानम् ॥ ३१ ॥

ताम्राङ्गुलीपिहितरन्ध्रतया च वेणुं
गानाकृतेन च सुपल्लवितं वहन्तम् ।
सौन्दर्यराशिमधिकोज्ज्वलमुत्पलाभं
मन्दस्मितं कुटिलकुन्तलमायताक्षम् ॥ ३२ ॥

पीताम्बरं पृथुविशालभुजान्तराळ-
संशोभिकौस्तुभलसद्वनमालिकाङ्कम् ।
जन्मान्तरार्जितसुकर्मफलैकदृश्यं
पत्रीश्वरः कपटगोपशिशुं ददर्श ॥ ३३ ॥

अथोपनीयमानस्य किरीटस्य महाकृतेः ।
अर्पणाय मतिं चक्रे शौरिमूर्ध्नि खगेश्वरः ॥ ३४ ॥

क्षीराब्धावनिरुद्धमूर्तिशिरसा पूर्वं धृतं तन्मह-
त्ताक्ष्यनीतमथो किरीटमयुतादित्यप्रभाभास्वरम् ।
तस्मिन्नन्दकुमारमूर्ध्नि कृतिना ताक्ष्र्येण सन्धारितं
भूषापिञ्छकृतेन्द्रजालकलयेवाऽसीदनूनाधिकम् ॥ ३५ ॥

पृथुलं किल वस्तु दूरदूरादणुरूपं निकटे महच्चकास्ति ।
गगने बहुदूरतो बृहद्यन्निकटे तत्तनिमानमाप चित्रम् ॥ ३६ ॥

मणिमयं मकुटं महदीदृशं शशिसहस्रसमद्युतिमञ्जुलम् ।
अपि समत्वमवाप्य समन्ततस्तदधिकं सदभादिति विस्मयः ॥ ३७ ॥

---

२. अधिकं—के = अधिकं शिरसीत्यर्थः । सत्—विद्यमानं सत् ॥

ग॥ अथाऽयं नन्दनन्दनोऽप्यमन्दानन्दतुन्दिलहृदम्बुजो निजकरारविन्दाभिनन्दितपदारविन्दस्य रामप्रियस्य मौळिदेशे मणिमकुटीं तां समर्पयामास ॥ ॥ ३८ ॥

अथ दृष्ट्वा परं ब्रह्म तत्किरीटविभूपितम् ।
स्कन्धे वहन्महानन्दो ननर्त विनतासुतः ॥ ३९ ॥

हृदि लक्ष्मीः पार्श्वयुगे भूनीळे शिरसि मणिमकुटम् ।
पतगपतौ स्थितिरग्रे यस्य स्वर्णप्रभा च तं वन्दे ॥ ४० ॥

कोटीरमौळिः कुटिलालकः श्रीरामप्रियः कामसहस्रकान्तिः ।
रेजे तदा मेरुरिवाऽमृतांशुबिम्बानुषङ्गोज्ज्वलशृङ्गभागः ॥ ४१ ॥

अनिरुद्धकिरीटं तदच्युतस्य शिरस्स्थितम् ।
निरुद्धपातकान् लोकान् च्युतमोहान् करोत्यहो ॥ ४२ ॥

दीप्रानिरुद्धमकुटीधरमच्युतं तं
संपश्यतां सुकृतिनां किमु वच्मि भाग्यम् ।
आराधयन्निजगृहे सुचिरं विधाता
नापश्यदीदृशविभूषमहो कदाऽपि ॥ ४३ ॥

अथ विनतशिराश्श्रीशौरिपादारविन्दे
तदनवधिमहिम्नाऽनाप्तचित्राब्धिपारः ।
कथयितुमहिशायिन्यच्युते तां प्रवृत्तिं
कलशसलिलराशिं प्राप पत्रीश्वरोऽपि ॥ ४४ ॥

तत्रानिरुद्धः श्रुतसर्ववृत्तः पतत्रिनेतारमथादिशत्सः ।
रामप्रियाय प्रतिवत्सरं तत्समर्प्य दिव्योत्सवमाचरेति ॥ ४५ ॥

यात्राप्रसङ्गे सति दक्षिणस्या दिशस्तथा तौ बलरामकृष्णौ ।
रामप्रियं श्रीपतिमुत्सवेन नारायणाद्रिं परिनिन्यतुस्तम् ॥ ४६ ॥

तत्र नारायणस्येमौ पुरतः परदैवतम् ।
उत्सवैरुपनीतं तत् स्थापयामासतुस्ततः ॥ ४७ ॥

अन्योन्यसौन्दर्यगुणातिरेकविबोधितालोकितृनेत्रभाग्यम् ।
मूर्तिद्वयं तत्परमस्य पुंसः समानरूपं सुतरां बभासे ॥ ४८ ॥

द्वैतं च मूर्तिद्वितयेन रूपसाम्येन चाद्वैतमुपाश्रयन् सः ।
तत्तन्मतोदाहरणाय नूनं नारायणस्तत्र विराजति स्म ॥ ४९ ॥

यस्यास्तु श्रीशमूर्तेरसकृदपिपिबन् रूपलक्ष्मीं स्वनेत्रैः
धाता तृप्तो न तस्यां सुरनरनयनानन्दहेतौ स्थितायाम् ।
पुंसामप्यक्षिचेतोहरमधुरतनू रामकृष्णौ च मुग्धौ
यस्यां साऽन्यापि लब्धा यदुधरणिभृता मोहनाय त्रिलोक्याः॥

नूनं जनो विरहितोऽपि कदाचिदात्मसम्बन्धिना क्वचन सङ्घटते पुनश्च ।
लक्ष्मीशमूर्तियुगळं चिरविप्रयुक्तं यत्सङ्गतं यदुगिरौ जगतां सुखाय ॥

एकत्र क्लृप्तस्थितिसंप्रवृद्धसौन्दर्यलावण्यगुणाभिरामम् ।
निरीक्ष्य नारायणमूर्तियुग्मं सीरी च शौरिश्चननन्दतुस्तौ ॥ ५२ ॥

इति तस्य यादवगिरेः शिखरं गतयोः कथां भगवतोस्सुभगाम् ।
निजगाद नारदमुनिर्भगवानिति शौनको मुनिगणाय जगौ ॥ ५३ ॥

इति श्रीयदुशैलनिवासिना जग्गु-शिङ्गरार्येण विरचिते
श्रीयदुशैलचम्पूप्रबन्धे
तृतीयः प्रपञ्चः



5

॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

## चतुर्थप्रपञ्चः

अथ शौनकः पुनरुवाच मुनीन् प्रति नारदेरितमिदं चरितम् ।
हरिभक्तहेळनममङ्गलमित्यवबोधयन् किमपि तद्विषयम् ॥ १ ॥

चतुर्वेदीति विख्यातः पुरा राजपुरोहितः ।
निष्णातः केवलं कर्मस्वासीत्कश्चन भूसुरः ॥ २ ॥

समये सति राजसन्निधौ प्रियचाटूनि वदन् स भूसुरः ।
परिभर्त्सयति स्म तद्बलादखिलानप्यनुजीविनो भृशम् ॥ ३ ॥

राजाश्रयी यत्तदयं प्रपूर्णकळङ्क एवात्र न शङ्कनीयम् ।
तथाऽपि शुद्धाकृतिवत्समस्तैरदृश्यतेत्येतदतीव चित्रम् ॥ ४ ॥

दयां जहौ दूरत एव नारीष्वलोलुपोऽसाविव विप्रवर्यः ।
भयं च नासीत्परलोकतोऽस्य सत्त्वाधिकत्वादिव धीरवृत्तेः ॥ ५ ॥

अहंकारेण नित्यं च ब्रह्मबाधाकृदप्यसौ ।
स्वस्य कृत्यादहो ब्रह्मबन्धुरेवाभवद्द्विजः ॥ ६ ॥

स तु सतीसुतबन्धुजनैर्युतो धनमदेन सतोऽप्यवधीरयन् ।
भुवि जनस्तुतिसिद्धिकृते परं रचयति स्म गृहेऽतिथिपूजनम् ॥ ७ ॥

श्लाघाभिलाषी सर्वत्र यजन् डम्भेन निस्त्रपः ।
सर्वातिथ्य इति ख्यातिं लेभे स धरणीसुरः ॥ ८ ॥

न केवलं सात्त्विकवेषमेनं जीवन्तमाहुर्गुणयुक्तमार्याः
तदन्तकालेऽप्यतिवेलपापाद्यमेशपूर्वैर्त्मनि नेष्यमाणम् ॥ ९ ॥

ग॥ अथ कदाचिदयं चतुर्वेदी विदितविविधविधिर्विधिवन्निज-धामनि पितृकर्म विधातुमनाः धराविबुधानात्मविधानामन्त्र्य नियन्त्रित-पारतन्त्र्यो मन्त्रयन् किमपि लाभतन्त्रमवर्तत ॥ ॥ १० ॥

तदानीं तु—

सौम्यो वक्त्रे वचसि मधुरो मानसे सुप्रसन्नो
बुद्धौ भक्तो भगवति हरौ कर्मणि श्लाघनीयः ।
वृद्धः प्राये विगळितबलो वर्ष्मणि त्वग्रजन्मा
वर्णे साह्ये त्वनधिकवयोबालकः कश्चिदायात ॥ ११ ॥

जराविपद्ग्रासमसह्यदुःखं दुर्गन्धजन्मावसथं शरीरम् ।
इच्छामि नैवेति वदन्निवासीत् वयःकृतैश्शीर्षतिरःप्रकम्पैः ॥

हृदि सत्त्वगुणः पूर्णो बहिरुन्मस्तकः किमु ।
इति विप्रवरस्तत्र पलितेन व्यभासत ॥ १३ ॥

सहे न दैर्घ्यं बत वर्त्मनोऽस्य श्रान्तोऽस्मि दूरभ्रमणेन सद्यः ।
इति क्रुधा किं करक्लृप्तयष्ट्या पदेपदे कुट्टयति स्म भूमिम् ॥ १४ ॥

ग॥ आगत्य स क्षित्यमर्त्यस्तस्य वेषाभिजात्यं सर्वातिथ्यकीर्तिं च तथ्यमित्यवेत्य प्रत्ययादित्थमकथयत् ॥ ॥ १५ ॥

निरन्तरायाः किमु वा द्विजन्मन् यज्ञाः महान्तः तव पञ्च नित्यम् ।
कच्चित्सहायैः कुशली भवांश्च किमादरः सत्सु निरर्गलस्ते ॥ १६ ॥

---

१. जीवन्तमेव केवलं गुणयुक्तं नाहुः । किन्तु अस्य अन्त-कालेऽपि गुणयुक्तं पाशबद्धं सन्तमाहुः ॥

दैवे गवि ब्रह्मणि तुल्यभक्त्या नृपस्तवास्ते किमु सत्त्वशीलः ।
निरामयास्सर्वजनाः किमत्र सर्वेषु तुष्टेषु हि विप्रसम्पत् ॥१७॥

ख्यातं हि सर्वत्र यशस्त्वदीयं हेतुस्तवैवात्र गुणो विशुद्धः ।
सुगन्धिचेत्पुष्पमयत्नतो हि सौरभ्यपूरः प्रवहत्युदारः ॥ १८ ॥

अहं समागां यदुशैलशृङ्गाद्बालो विनीतो मम पुत्र एषः
इमां गृहाणाच्युतपादपद्मे समर्पितां श्रीतुळसीं यशस्विन् ॥१९॥

इत्थं निगद्य तुळसीदळगर्भहस्तं
यावत्प्रसारयति तस्य करे प्रदातुम् ।
तावत्क्रुदस्य हृदयादुदभून्निरोद्धुं
नूनं विचिन्त्य निजवर्गहतिं तुलस्या ॥ २० ॥

ग॥ अथ चतुर्वेदी तु सकलेष्वपि निजासमानमतिसमुन्नत्या तस्यानुयोगवचसाऽभिभूत इव भूयसाऽमर्षभारेण किमरे भिक्षुक! विवृणोषि मयि तव वाग्वैशद्यमलमनेन स्तोत्रायासेन त्वदागमनकारणमभिधाय द्रुतमपेहि न मे त्वयि सल्लापावसर इति निष्ठुरवचसा प्रत्याचख्यौ ॥

शान्त्याऽत्मनस्सोऽपि धरासुरेन्द्रो विकारहीनो हृदये तमित्थम् ।
ऊचे तथाचेदपयामि विद्वन् ममागमान्मास्तु तवान्तरायः ॥२२॥

किन्तु श्रान्तोऽयमत्यर्थं बालो मार्गेण च क्षुधा ।
तदस्मै किमपि ब्रह्मन् याचेऽन्नं तु दीयतामिति ॥ २३ ॥

ततस्स सर्वातिथिपूजकोऽसावुवाच विप्रं तमिति प्रगल्भम् ।
अस्मिन् दिने पैतृककर्म तस्मान्न लभ्यते मे सदने त्वयाऽन्नम् ॥

ग॥ एवं तेन तिरस्कृतेऽपि तस्मिन् विप्रवरे बालकश्रान्तिविशेषेण परिक्लेशितमानसे तण्डुलानि वा देहीति याचति सति स चतुर्वेदी तु

विषमरुषा परुषाक्षारैर्विगीतवचनैः वहुशः तिरस्कृत्य तं विप्रवरं कश्मलिते द्वाराङ्गणे श्रमवशान्निपण्णं तं वालकं स्वसुतेन वहिर्निस्सार्य झडिति कवाटमाववन्ध ॥ ॥ २५ ॥

अरमररयुगे तथाववद्धे स्वरुपरिपातजवेन ताडनेन ।
क्षततनुरपतत् क्षितौ स वालः पितुरमिताश्रुतरङ्गकेण साकम् ॥

ततः प्रणश्येति शुचा शपन्तं सुतं समुत्थाप्य शनैस्स विप्रः ।
चलेन हस्तेन जराशुचाभ्यां परामृशन् सान्त्ववचो वभाषे ॥ २७ ॥

वत्सालमेतैः परुषैर्वचोभिस्तमोविकारस्य वयं न पात्रम् ।
क शान्तियुक्ता हरिपादभक्ताः कान्तर्द्विषत्कोपभरोऽयमुग्रः ॥

विपत्सु दुःखेषु पराभवेषु सम्पत्सु सौख्येष्वपि गण्यतासु ।
न विक्रियन्ते मनसाऽपि सन्तो वैश्वानरेऽपीव सुवर्णवर्णम् ॥ २९ ॥

इत्याश्वास्य सुतं करेण चलता गृह्णन् कठोरांशुभि-
र्व्योम्नो मध्यमुपाश्रितस्य तरणेस्सन्तप्यमानो भृशम् ।
यत्नन्यस्तमपि स्खलत्पदमधःकर्षन् स भूनिर्जर-
स्तद्ग्रामादगमत्सुदूरममले चित्ते स्मरन् माधवम् ॥ ३० ॥

विलोक्य पथि कञ्चन द्विजवरं प्रसन्नाकृतिं
किमेष हरिचोदनात्समुपयाति वाऽस्मत्कृते ।
अथ त्रिषु गुणेषु वा प्रथम एव मूर्तः किमि-
त्यशङ्कत वसुन्धराऽमरवरस्ततश्चेतसि ॥ ३१ ॥

ग॥ सोऽपि निकटमासाद्य विनयवशेन विष्णुरातोऽयमभिवन्दत इति स्वनामाभिधानपूर्वकमभिवाद्य कुशलमनुयुज्य च को भवान् कुत्रत्यः कोऽयं वालको विषण्ण इवाऽस्ते किं वृत्तमित्यखिलमपृच्छत् ॥ ३२ ॥

हरिरातपदाङ्कितं विदुर्मामहमागां यदुभूभृतस्सुतोऽयम् ।
गमनेन पथो बुभुक्षया च व्यथितोऽस्तीति तमब्रवीत्स विप्रः ॥

श्रुत्वा विप्रवचस्ततस्स च मुदा धन्योऽहमद्याभवं
युष्मत्पादतलाम्बुजव्यतिकराद्भूयाद्गृहं पावनम् ।
पुत्राः द्वादश सन्ति केशवपदाद्याख्यास्सती मेऽनघा
नान्यं वेद्मि हरिं विना तदुररीकुर्वेस्सदर्चां गुणिन ॥

हरिरातमिति प्रार्थ्य विष्णुरातस्सपुत्रकम् ।
आदरेणादरो[3] निस्स्वोऽप्यानयत्स्वालयं ततः ॥ ३५ ॥

गेहिनीं सुमुखीं प्राह विष्णुरात उपह्वरे ।
दिनेऽस्मिन्नुञ्छवृत्तौ यल्लब्धं सर्वं पचेति तत् ॥ ३६ ॥

ग॥ अथ रिक्ततयातिमात्रापत्रपे तत्कलत्रेऽपि तत्र पवित्रामत्रेषु यात्रिकाभ्यवहाराय विनयमात्रविचित्ररसं पचति सति — ॥ ३७ ॥

काषायदण्डत्रयपुण्डरीकबीजोर्ध्वपुण्ड्रादिभिरुज्ज्वलाङ्गः ।
शिष्यैश्चतुर्भिस्सह संयमीन्द्रः कश्चित्समागच्छदथास्य गेहम् ॥

ग॥ अथ तौ विष्णुरातहरिरातावतिवेलभक्तिप्रमोदयोर्दुर्भरभारेणानमिताविव सुचिरमष्टाङ्गैः प्रणम्य सम्यगभिक्षालिततदीयचरणनलिनपयः प्रपपतुः ॥ ॥ ३९ ॥

विधाय पूजां प्रथमं मुरारेस्सप्तापि तान् सद्मनि भोजयित्वा ।
स विष्णुरातो मुमुदे नितान्तमतर्कितप्राप्तमहात्मसङ्गात् ॥ ४० ॥

ग॥ तदानीं तु बुभुक्षितेन बालकेन पीडितया पत्न्या न किञ्चिदपि हव्यमवशिष्टमिति कथितेऽपि तस्मिन् विप्रवरे पुनः सम्यक्पश्येति दयितां

२. निस्स्वोऽपि – दरिद्रोऽपि । ३. अदरः – भयरहितः ॥

प्रतिवदति साऽपि तथैव भर्तृवचसा विलोक्य पूर्ववदापूरितमन्नपात्रमाश्चर्य-मनसा विलोकमाना पतिपुत्रानपि भोजयित्वाऽभुङ्क्त च स्वयमपि ॥ ४१ ॥

नित्यं भवन्ति स्म च पूरितानि पात्राण्यथान्नादिभिरश्रमेण ।
धनं च लब्धं भुवि तन्महिम्ना गृहेऽतिथीन् पूजयति स्म भक्त्या ॥

सर्वातिथ्यगृहे तु तत्र फणिना क्ष्वेळं समुद्गीरितं
क्षीरे श्राद्धनिमन्त्रितास्तदपिबन् मम्रुश्च ते केवलम् ।
भीत्याऽसौ तु विहाय सर्वमपि तन्निश्शङ्कमन्यत्पुनः
पक्त्वाऽभुङ्क्त च बन्धुभिस्सह निरुद्विग्नोऽभवत्तन्मृतौ ॥

असौ जघानाखिलभूसुरांस्तानिति प्रवादे जनिते नगर्याम् ।
राज्ञाऽभिभूतस्स तु बन्धितस्तत्फलानुभावाय च धर्मपालैः ॥

भिया च केचिन्नृपदण्डनेन केचित्तथा मानवशेन केचित् ।
मम्रुस्तदानीं तदगारभाजस्सर्वेऽपि निश्शेषमहो त्र्यहेण ॥ ४५ ॥

अथ कृतान्तभटाः परितोऽपि तं परिवृताः परिणाह्य च रज्जुभिः ।
अनुचरैस्सममेनमधोमुखं पथि चकर्षुरमर्षभयङ्कराः ॥ ४६ ॥

करालरूपैः परिभर्त्सनैश्च सन्ताडनैर्दण्डभृतो भटानाम् ।
अवाच्यमत्युग्रमवाप्य दुःखं ते चुक्रुशुः पापवतां पुरोगाः ॥ ४७ ॥

ग॥ इत्थमशिशिरकिरणकठोरातपसन्तप्तशितशिलामुखशतदुरव-गाहेन पथाऽतीत्य दवीयसीं सरणिं तरङ्गिणीशरीरिणीमननीयसीं विपदमिव वैतरणीमवगाह्य चादूर एव विदारितोदरदरीपरिक्षिप्तमरी-चिकाफलक्षोदसन्तापं दुर्वहभरानम्रानःकर्षणत्वरणकशाहन्यमानजर्जरित-कळेबरमायसवायसास्याकृष्यमाणकनीनिकाभागं कराळकाळभुजङ्गदश्य-मानमर्मस्थानं घोरसारमेयदंष्ट्राग्रलूयमानजठरप्रदेशं क्रकचधाराशीर्यमाण-शिरोभागं मुसलाहतिभज्यमानभुजदण्डं सीव्यमानाधरोष्ठं निष्पिष्यमाण-

कण्ठनाळं घृष्यमाणदेहबन्धं प्रज्वालिततैलभाण्डपतनावसरभयविदीर्णविवर्णवदनदीनाक्रन्दं प्रतप्तायःपिण्डकबळनसमयविरचितविकारचीत्कारं दहनमयनिलयप्रवेशवेलाविजृम्भितहाहारवं विपन्मयं क्लेशप्रायं हिंसाशतं यातनातरङ्गं स्वकर्मानुरूपं पापफलमनुभवन्तं जीवलोकमवलोक्य च वध्यतामयं स्तम्भे छिद्यतामेष रसनायां भज्यतामसावूरुदेशे आरोप्यतामस्य शिरसि शिलाभारः निक्षिप्यतामयमन्धतमसे निपात्यतामयं रौरवे नियोज्यतामसौ कालसूत्रेणेत्यादिभयङ्करान्तकभटतर्जनगर्जनाक्षराण्याकर्ण्य च इदं परस्वापहर्तुरेतदनृतवदस्य चेदं पाकभेदिन इदमवकीर्णिन इदमनुजीविहिंसकस्येदं शरणागतघातुकस्येदं स्वामिद्रोहिण इदमपहृतपरकळत्रस्येदं सतीवञ्चकस्येदं गुरुद्रोहिण इदं कृतघ्नस्येदं साधुजनहिंसकस्येदं ब्रह्मघ्नस्य चेत्यादिलेखनाक्षराभिज्ञापिततत्तद्दण्डस्थानमवबुध्य च स चतुर्वेदी द्विगुणितभयचञ्चलनयनकरोरुभागः मुहुर्मुह्यन् मुहुर्विवृण्वन् वदनं तैरेव कालदूतैर्गळहस्तिकया पुरस्तात्प्रवेशितस्सहानुचरैरनतिदूर एव महिषरोमन्थफेनिलसमीपभागं मृदुलकम्बलास्तीर्णोन्नतवरासनोपरि कृतोपवेशं पार्श्वगतमसृणशिलाभित्तिप्रत्युप्तदन्तशङ्कुपङ्क्तिविनिहिततीक्ष्णतरविविधायुधजातं चित्रगुप्तपरिपठ्यमानचेतनापराधपरंपरं विचार्यमाणागःप्रकारं विधीयमानशिक्षाशतं आज्ञाप्रतीक्षणव्यग्रोग्रकृत्यभृत्यशताक्रान्ताग्रभागं वल्लवमिव धृतदण्डं जलावतीर्णवनवारणमिव समूलोत्कीर्णपङ्कजातं विहितशिक्षाभेदमपि समवर्तिनं अवाचीदिगीशमपि प्राचीनं जीवितेशमपि परेतपतिं सप्ताश्वजातमपि महिषवाहनं यममप्यद्वितीयं धर्मराजमपश्यत् ॥ ४८ ॥

दूरादेव विशुष्कगद्गदगळप्रान्तोद्गळद्भैरवा-
क्रन्दस्फोटितकण्ठनाळशमितप्रोच्चस्वरैरक्षरैः ।

---

४. प्राच्याः इनः – स्वामी, प्राचीनः–पुरातनश्च । ९. सप्तानां अश्वानां जातं समूहो यस्य सः, सप्ताश्वात्–सूर्यात् जातः ॥

धर्मं प्राह विभो तवैव पुरतो धर्मव्यपायो यदि
केमे दीनजनाः भजन्ति शरणं तन्मोचयास्मानिति ॥४९॥

अथ तदीयामाकर्ण्य वाणीम्—

स्मितवदनस्स च शमनस्सपरिजनं तं विमोच्य निजभृत्यैः ।
अयि विद्वंस्त्वयि रचितं धर्मोपायं वदेति पप्रच्छ ॥ ५० ॥

वेदानहं वेद षडङ्गयुक्तान् धर्मप्रवृत्तौ च न मादृशोऽन्यः ।
अभ्यागतार्चानिरतोऽभवं तद्राजाऽपि मां पूजयति स्म भक्त्या ॥

कळत्रपुत्रप्रभृतिष्वमीषु ममैव पन्थानमुपाश्रितेषु ।
तथाऽप्यवश्यं यदि बाधसेऽस्मान् निरर्गळस्येशितुरर्गळं किम् ॥

ग॥ एवमुक्तवन्तं चतुर्वेदिनमात्मवेदी पुनरिदमाह पितृपतिः ॥

श्लाघापदं विविधकौशलकर्म नर्मवाक्पाटवं प्रथितसत्कुलजन्म शौर्यम् ।
ऐश्वर्यमुज्ज्वलविभूषणमप्यशेषाण्येतानि जात्वपि न सद्गतिसाधकानि ॥

शान्तिः कृपा सकलजन्तुषु सात्विकत्वं
भक्ती रमाप्रियतमे च तथा तदीये ।
पापाद्भयं सुकृतिनोऽस्ति च यस्य तस्य
नामाक्षराणि जपतामपि सद्गतिस्स्यात् ॥ ५१ ॥

एवं स्थिते —

रचितं त्वयाऽत्मगुणकत्थनमप्यखिलं च वेद्मि बत तथ्यमिति ।
अभिसन्धिभेदमवलम्ब्य हृतं स्तुतये परं यदकरोस्सकलम् ॥

अन्यच्च —

शान्तिः कथं तस्य महागसस्ते यद्वन्दनीये त्रिदशैश्च तस्मिन् ।
महात्मनि ब्रह्मवरेऽप्ययुङ्क्थाः मदेन दुर्वृत्त कठोरवाचः ॥ ५७ ॥

श्रान्तं क्षुधार्तं तनयं तदीयं निकेतनात्त्वं निरकासयो यत् ।
स्मृत्वाऽपि तन्मे हृदयं नितान्तं प्रकम्पते निर्घृण जाल्मवृत्ते ॥ ५८ ॥

अरे दुरभिमानमदमत्तचित्त! किमपरैरसङ्ख्येयैस्तव कलुषकृत्यप्रकटनैश्च ॥ ॥ ५९ ॥

एकैकमन्तोरपि तेऽनुभोक्तुं फलानि जन्मानि शतं च नालम् ।
विकत्थसे हन्त विहाय लज्जां धर्मव्यपायो रचितस्त्वयेति ॥६०॥

ग॥ अथ जोषंभावमधिगतं चतुर्वेदिनं भूयोऽपीत्थं प्राह सूर्यतनयः । किमरेऽनुदितशब्दागम ! ॥ ६१ ॥

उत्तमपुरुषार्हत्वं कथं भवान् लब्धुमिच्छति वा ।
मध्यमपुरुषार्हत्वं चापि यतो नैव शक्यते लब्धुम् ॥ ६२ ॥

निजागस्तथ्यं तत्सकलमिति कालस्य वचना-
दथाङ्गीकृत्यास्मिन्ननुतपति दैन्यच्युतमदे ।
दयोदारो धर्मो विवशमनुकम्प्याऽह कुमते
दयापात्रं यन्मे तदनुभव किञ्चित्फलमिदम् ॥ ६३ ॥

आपद्मनाभपदभक्तकटाक्षपातमापद्भयप्रचुरदुःखशतोपपन्नम् ।
ब्रह्माशरत्वमनुजीविभिरेभिराप्य जिह्माशय त्वमटवीष्वट विन्ध्यसानोः ॥

ग॥ ये तु तदा भवता समामन्त्रितास्त्वदीयवृजिनान्नभोजनगृध्नवस्तेऽपि गृध्राभूयासुरिति ॥ ॥ ६५ ॥

तदात्व एव त्वरया यमस्य भृत्यास्तु मूर्ता इव तन्निदेशाः ।
निपातयामासुरपारपापानपास्तसंज्ञानथ कर्मभूम्याम् ॥ ६६ ॥

---

५. अनुदितशब्दागम—अनुत्पन्नशब्दशास्त्र; आश्रितमौनव्रतेति च ।
६. उत्तमपुरुषार्हत्वमित्यत्र व्याकरणविषयश्च सूचितः ॥

करालमुखकन्दराः पृथुशिताग्रदंष्ट्राङ्कुरा-
श्चलन्नयनकोटराः पृथुलवल्गदोष्ठाधराः ।
क्रमेळकगळोरुकाः बहुळपक्षरात्रिप्रभाः
बभूवुरथ तेऽखिलास्सपदि दारुणाः राक्षसाः ॥ ६७ ॥

करोटिभ्यां कृत्वा श्रवणयुगभूषां च करिणः
तथा कृत्या वस्त्रं विदधदुपवीतं च सिरया ।
पिपासाक्षुन्निद्रागदबहुळदुःखान्यनुभव-
न्नुवासाऽसौ क्रव्यान्निजपरिजनैस्तत्र विपिने ॥ ६८ ॥

प्रत्यग्रच्छिन्नवन्यद्विपशतविगळद्रक्तधारापिपासा-
व्यावल्गत्पावकार्चिःप्रतिभटरसनालेह्यमानाग्रदंष्ट्रः ।
मस्तिष्कान्त्रास्थिमांसक्षतजविभजनप्राप्तकालातिपातो-
द्भूतक्रोधप्रसर्पद्रदनकटकटात्कारविभ्यत्स्वदारः ॥ ६९ ॥

क्रव्यादसौ भीषयति स्म वन्यान् जन्तूंस्तदानीमिति नैव चित्रम् ।
अद्यापि यद्घोरतरस्वरूपकथाप्रसङ्गेऽपि च कम्पते हृत् ॥ ७० ॥

त्रातारमामिषमुखैर्निजवर्गमेनं श्रान्तं दिनेशकिरणैः परिवार्य सान्द्रम् ।
गृध्राश्च ते निजगरुद्व्यजनोपचारैराश्वासयन्त इव बभ्रमुरभ्रमार्गे ॥

कृत्वा भक्तजनेषु कैटभरिपोरागांसि कालान् बहून्
दुःखान्येवमवाप्य दारतनयैस्साकं स विप्राधमः ।
लब्ध्वा प्रीतिमथो सतां पुनरभूत्तीर्णो विपद्वारिधे-
र्यैत्तच्च श्रुणुतेत्युवाच चरितं श्रीशौनकस्तापसान् ॥ ७२ ॥

तदनूत्तरनीघृतः प्रयातौ द्विजवर्यौ यदुभूधरे रमेशम् ।
प्रणिपत्य निजां पुरीं यियासू पथि सौभाग्यमपश्यतां धरण्याः ॥

नगरीश्च गरीयसीस्समृद्ध्या तटिनीश्च स्फुटनीरजाभिरामाः ।
विपिनान्यपि नागसेवितानि प्रसमीक्ष्यामितमापतुः प्रमोदम् ॥

इति पर्यटतोः पुण्यतीर्थक्षेत्राणि विप्रयोः ।
पथि पाथोनिधिश्चापि चक्षुष्पथमथाऽसदत् ॥ ७५ ॥

ग॥ अथापरिमेयवैभववतो भगवतो विचित्रसर्गसौभाग्यवदावदमर्णवं निर्वर्ण्य तावेवं वर्णयामासतुः ॥ प्रथमः— ॥ ७६ ॥

रामश्श्यामळ एव तस्य हृदयं गम्भीरमेवाभव-
द्बाहू दीर्घतरौ च किञ्च नयने चञ्चन्मनोहारिणी ।
इत्युच्चैर्निनदन्निवाय मुदधिस्संसूचयत्यादरात्
स्वैरेवाम्बुमहानिवेशविचलत्कल्लोलमीनाधिपैः ॥ ७७ ॥

पीयूषार्थं मथ्यमाने पयोधौ
यास्संजाताः भूरिकल्लोलमालाः ।
तत्संस्काराः नैव शान्तास्तरङ्गाः
नोचेदेषां संभवे कोऽस्ति हेतुः ॥ ७८ ॥

किञ्च—

अरुणनयनकोणे राघवे बाणपाणौ
शरणमुपयियासुर्भीतभीतोऽब्धिराजः ।
करविधृतमदाघद्रत्नमुक्तोपहारं
तदभिनयति भङ्गैस्सङ्किरन् शुक्तिजालम् ॥ ७९ ॥

द्वितीयः—

ग॥ विद्वन् वैकुण्ठप्रिय पश्यास्य पयसां ताण्डवं अम्भोधिं संबोध्य च भगवन् उदन्वन् भवन्तमवलोकमानान् मानवान् अभिनन्दयसि विचित्रव्यापारैः ॥ ॥ ८० ॥

यतः --

विलासपरिसूचकस्फुरितमीननेत्राञ्चला-
स्तरङ्गकरसङ्गिरद्विविधशुक्तिपुष्पाञ्जलीः ।
निनादमृदुगीतिभिस्सुसुभगास्तवापस्त्रियो
विलोक्य भुवि विस्मयं भजति नैव कोवा जनः ॥

अथ सलिलमुपस्पृश्य – ॥ ८१ ॥

पूर्वं मामपिबन्मुनिः करतलेनैवाम्भसामाकरं
वेशन्तीकृतवान् महान्तमपि मां पङ्क्त्यां कपिः कश्चन ।
गूढं बाडववह्निरप्यतितरामद्यापि मां पीडयत्येवं
शोकजबाष्पशेषिततया क्षारं जलं ते ध्रुवम् ॥ ८२ ॥

ग॥ किञ्च जरसि नवोढसुन्दरीणां नराणां भङ्गीमङ्गीकरोषि ॥

धात्राऽऽदौ[7] जनितस्ततोऽसि नितरां वृद्धस्तवाङ्गेऽखिले
संजाता च वलिः[8] कफं[9] वमसि कं[10] वाताहतं[11] कम्पते ।
बह्व्यस्ते ललनाः पयोददिवसोत्कण्ठास्ततस्त्वत्प्रिया-
स्वाकृष्टा[12] यमुना हलायुधभृता गङ्गा गता शङ्करम् ॥ ८४ ॥

---

७. धात्राऽऽदौ जनितः– अप एव ससर्जादाविति पुराणवचनात् । ८. वलिस्सञ्जाता– वृद्धपक्षे, जराप्रयुक्तचर्मशैथिल्यम्; समुद्रपक्षे, तरङ्गपङ्क्तिश्च समजनि.। ९. कफं वमसि– श्लेष्मोद्गारं; फेनवमनं च करोषि । १०. वाताहतन्–वातरोगपीडितम्; वायुना प्रेरितं च । ११. कं–शिरः; वारि च कम्पते । ११. पयोददिवसोत्कण्ठाः– वर्षर्तुदिवसेषु कामातिशयशालिन्यः, अनेन समुद्रपत्नीनां पूर्णतारुण्यं सूचितम् । वर्षर्तौ तटोत्पीडकजलप्रवाहवत्यश्च । १२. यमुना, हलायुधभृता आकृष्टा– इत्यत्र बलरामकृतयमुनाऽऽकर्षणरूपपुराणकथाऽनुसन्धेया ॥

ग॥ अथवा संसारिपु कोवा त्वमिवपर्याप्तसर्वसुखः ॥ ८५ ॥

रत्नाकरोऽसि रमणोऽसि तरङ्गिणीनां
रामाङ्घ्रिसेवनपरोऽसि रमापिताऽसि ।
सन्तानसैन्धवसुधासुरभीसुधांशून्
साराश्च सागर ससर्जिथ सारसाक्षीः ॥ ८६ ॥

ग॥ इत्यादिप्रतिपादितार्णववर्णनौ तौ मनीषिणौ क्रमेण विन्ध्यारण्यमपि समासाद्य कुत्रचित्सरसि कृतावगाहौ विधिवदनुष्ठितसन्ध्यार्चनौ भगवन्तमाराध्य वीध्रमन्नं तन्निवेदितमुपभुज्य तदीयगुणकथनेन विश्रान्तिसुखमनुभवन्तौ सुखमासाताम् ॥ ॥ ८७ ॥

अथ ब्रह्मरक्षोऽपि वन्यान् विचिन्वन्मृगानत्तुमागादिमौ चातिवेगात् ।
हरेः कीर्तनं तत्समाकर्ण्य दूरात्स्मृतिं प्राप जन्मान्तरस्यात्मनश्च ॥

महात्मनोः पादतलाभिमर्शात्तयोः पवित्राम्बुसरोवरं तत् ।
दिष्ट्याऽस्य दृष्टेः पदवीं प्रपेदे पिपासितस्य द्विजराक्षसस्य ॥

तत्रानुयायिभिस्सत्रा यातुनः पिबतो जलम् ।
सत्त्ववृत्तिर्मतिर्जाता तदा सुकृतिनो यथा ॥ ९० ॥

स्मृत्वा दण्डधरोपदिष्टफणितिं मत्वा च तौ भूसुरौ
जीवातू निजराक्षसत्वविषमव्याधेः प्रसक्तौ हठात् ।
नत्वा दूरत एव तत्र शरणं गत्वा पदाब्जं तयो-
श्शापादुत्तरितुं स राक्षसवपुः स्वोदन्तमाभ्यांजगौ ॥ ९१ ॥

भक्त्या यदुक्ष्माभृदधीश्वरस्य प्रदक्षिणं कीर्तनमाचरंस्त्वम् ।
मुक्तो भविष्यस्यघतस्सहैतैरित्याहतुस्तं कृपयाऽथ विप्रौ ॥ ९२ ॥

किङ्करवाणीति भृशं शङ्कितवांस्तात संसृतेर्मोभैः ।
अङ्कुरिता परमहिता शङ्करवाणीह रामरामेति ॥ ९३ ॥

ग॥ अथ सोऽपि ब्रह्मराक्षसो निजपरिवारपरिवृतस्तथैव यादवभूधरपरिसरमासाद्य भूसुरभाषितानुसारं निरन्तरमनुसन्धीयमानरामनामा तं पवित्रं गोत्रं परितः प्रदक्षिणीकुर्वन् सर्वं कालमपि यदुगिरिपतिचरणनळिनस्मरणसुखेनातिवाहयन्नवर्तत ॥ ॥ ९४ ॥

अथ यदुगिरिनाथो विस्मरन् राक्षसस्य
प्रबलवृजिनजालं तत्कृतेन स्तवेन ।
प्रसृमरशशिरोचिश्चन्द्रकान्ताश्मलीला-
मभजत करुणायाः सद्मना मानसेन ॥ ९५ ॥

इह कतिचन सन्तो मां भजन्तो नितान्तं
मम परवशयन्ति स्वान्तमत्यन्तभक्त्या ।
कलितसकलतीर्थानानयेतं युवां ता-
निति पतिरखिलानामादिशद्द्वारपालौ ॥ ९६ ॥

रक्षकस्य त्रिजगतां तदनु द्वाररक्षकौ ।
रक्षसोऽन्तिकमासाद्य चचक्षाते हरेः कृपाम् ॥ ९७ ॥

यातुधानस्स च मुदा सह गृध्रैश्च बान्धवैः ।
मेने कृतार्थमात्मानं तेने तत्पदयोर्नतिम् ॥ ९८ ॥

तदनु च स चतुर्वेदी विधिवत्तच्चोदितेषु तीर्थेषु ।
गृध्रैरपि निजवर्ग्यैर्ममज्ज चैवं प्रसन्नहृदयेन ॥ ९९ ॥

प्राग्वेदपुष्करिण्यां पश्चाद्दर्भे ततश्च पालाशे ।
यादव्यामथ पद्मे तीर्थे पाराशरे च विपुलजले ॥ १०० ॥

नारायणह्रदे तद्वैकुण्ठपदप्रसिद्धगङ्गायाम् ।
स्नात्वा लेभेऽधिकृतिं स्नातुं कल्याणसरसि सुरवन्द्ये ॥ १०१ ॥

ब्राह्मं पवित्रं प्रतिपद्य रूपं कल्याणतीर्थेऽथ कृताप्लवानाम् ।
तेषां हरिद्वारपपाणिपद्मैस्तापोर्ध्वपुण्ड्रादिविधिः प्रक्लृप्तः ॥ १०२ ॥

अथ मणिरिव शाणोद्घर्षणादुज्ज्वलत्वं
द्विगुणितमुपगम्य ब्रह्मसंघः स पूतः ।
मुररिपुपदसेवोत्कण्ठया प्राप तूर्णं
मुदमिव सुविशालां श्रीपतेर्वासभूमिम् ॥ १०३ ॥

नारयणं नरकवारणनैजनामपारायणप्रवणभक्तपरायणं ते ।
आकर्णपूर्णनयनं कलशार्णवात्मजाताश्रितं श्रुतिनुतं सहसा प्रणेमुः ॥

कृत्वा चिरं चरणपङ्कजयोस्सपर्यां
श्रीशस्य भक्तिभरितां यदुशैलभर्तुः ।
प्राप्यैहिकं सुखममुत्र च नित्यसूरि-
सेवारसेऽपि समभागमवापुरेते ॥ १०५ ॥

नारदोक्तमिदं वृत्तं शौनको मुनिसंसदे ।
प्रथितः कथयामास कथामृतपयोनिधिः ॥ १०६ ॥

इति श्रीयदुशैलनिवासिना जग्गु-शिङ्गरार्येण विरचिते
श्रीयदुशैलचम्पूप्रबन्धे
चतुर्थः प्रपञ्चः



॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

## पञ्चमप्रपञ्चः

सङ्क्षेपेण ततः प्राह नारदोक्तं स शौनकः ।
मुनिभ्यस्तत्तदाख्यानं यथाप्राप्तक्रमं हरेः ॥ १ ॥

कदाचिद्वेदार्थं मलिनमतयो युक्तिशरणाः
यथेच्छं शाक्याद्या नरमिव गदाः ग्लानिमनयन् ।
तदा वेदाः श्रीशं भिषजमुपगम्याऽखिलरुजां
कृपापारावारं प्रणतशिरसस्तुष्टुवुरमी ॥ २ ॥

गुणांस्ते व्याख्यातुं परमपुरुषात्यद्भुतगुण-
प्रवृत्तास्साकल्याद्वयमिह तत्स्पर्शिवचनैः ।
तदीयैकैकांशेष्वणुतरविचारेऽपि बहुशः
परब्रह्मन् श्रान्तास्तदतुलमहिम्ने तव नमः ॥ ३ ॥

बिभर्षि ब्रह्माण्डान्युदरकुहरे तेष्वणुतरे
तथाऽन्तर्यामी त्वं बहिरसि सुदूरेऽपि च ततः ।
स्वतन्त्रस्सर्वेशस्तदपि करुणायत्तहृदयो
वचोतीतानन्ताद्भुततरमहिम्ने तव नमः ॥ ४ ॥

श्रीवत्साङ्क चतुर्भुजाब्जनयन प्रावृट्पयोदद्युते
पत्रीशध्वज पद्मनाभ परमव्योमाधिवास प्रभो ।
भक्तापद्व्यपनोदनव्रत लसत्पञ्चायुध श्रीपते
कारुण्यामृतवर्षमत्रभवतो याचामहेऽमी वयम् ॥ ५ ॥

7

इति प्रणम्याथ समुत्थितांस्तान्वेदान्मुकुन्दः कुशलानुयोगैः ।
सम्मान्य तेषां विपदं विदित्वा तत्प्रार्थनां पूरयितुं जगाद ॥ ६ ॥

दत्तात्रेयाऽभिधया धात्र्यां तावत्कृतावतारोऽहम् ।
संस्थापयामि तत्त्वं मम शिष्यत्वं समासदत यूयम् ॥ ७ ॥

अनुगृह्य तथा वेदानवतीर्य च भूतले ।
वेदपुष्करणीतीरे चक्रे काषायसङ्ग्रहम् ॥ ८ ॥

अथान्तेवासिभिर्वेदैर्युक्तः पद्मापतिर्यतिः ।
परतत्त्वमुपन्यस्य स्वतत्त्वं सम्यगातनोत् ॥ ९ ॥

शाण्डिल्यनामाऽपि मुनिर्महात्मा दर्भाख्यतीर्थस्य तटे तपस्यन् ।
प्रकाशयामास च पाञ्चरात्रप्रमाणवाक्यैः परतत्त्वसारम् ॥ १० ॥

ग॥ तदनु जगति परिवृद्धेषु बौद्धेषु खण्डितेषु पाषण्डेषु क्षीणोदयेषु काणादेषु लूनेषु जैनेषु निरस्तेषु समस्तेष्वपीतरकुमतिमतेषु परमामोदकाष्ठामध्यतिष्ठदयं नारायणपरतत्त्वसिद्धान्तः ॥ ११ ॥

ग॥ एकदा तु तत्र तौ दत्तात्रेयशाण्डिल्यौ समन्ततोऽन्तेवासिजनसंसेवितान्तरौ परस्परसन्दर्शनाभिनन्दितामन्दानन्दकन्दलौ मुकुन्दकथामरन्दनिष्यन्दमिलिन्दायमानमानसौ बृसीमधिष्ठाय सत्कथाकथनमित्थं प्रावर्तयताम् ॥ ॥ १२ ॥

शरणागतरक्षणेन साकं न परो धर्मचयः प्रयाति साम्यम् ।
अवलोकितपूर्व एव यस्मादपि तिर्यक्षु महानयं हि धर्मः ॥ १३ ॥

अस्मिन्नेव महावने वनचरो भीतो नरो व्याघ्रतः
कश्चिच्छाखिनमारुरोह शरणं प्रापच्च कञ्चित्कपिम् ।
निद्रालुं विनिपात्य तं कपिमधस्तद्व्याघ्रसञ्चोदनात्
स्वस्य क्षेपणमाश्रुतेन कपिना तेनैव संरक्षितः ॥ १४ ॥

किञ्च—

नाळीजङ्घो हंसवर्यः कुवेरान्मित्राद्विप्रं निस्स्वमेकं समर्च्य ।
पश्चाद्विद्धो भोक्तुकामेन तेन स्वर्गं प्राप्य प्रापयत्तं च पापम् ॥ १९ ॥

ग॥ एवमेव श्रवणमधुरायां हृदयारविन्दसंमोददानचतुरायां विविधकथायां प्रवर्तमानायाम्— ॥ १६ ॥

पराशरः पुराणस्य कर्ता मैत्रेयमाश्रितम् ।
ज्ञानेन पूरयन् प्रापत्तं देशं चाश्रृणोत्कथाः ॥ १७ ॥

तुलसीसदृशी न दृश्यतेऽन्या सुमनस्सु प्रियतां गता मुरारेः ।
इह कापि पुराप्रवृत्तिरार्यैः कथिता यादवशैलनायकस्य ॥ १८ ॥

राजा बभूवाच्युतपादभक्तो यथार्थनामा किल धर्मकेतुः ।
नारायणं पूजयितुं कदाचित्समासदद्यादवशैलश्रृङ्गम् ॥ १९ ॥

पुरोधसोक्तान्यथ कल्पयित्वा पुष्पाणि गाङ्गेयमयान्युदारः ।
आनर्च तैरेव सुमैः रमेशं भक्ष्याणि भोज्यानि निवेद्य तस्मै ॥

ग॥ एवं नवदिनानि नवनवानि समर्चनानि विधाय परेद्युरपि —

आसायमरविन्दाक्षमभ्यर्च्य स महीपतिः ।
प्रासादं सत्कथालापैर्विप्रैस्सह समाविशत् ॥ २२ ॥

ग॥ अथ चरमगिरिपरिसरविपिनज्योतिर्लतानिकुरुम्बप्रमुषित-निजतेजःप्रकर इव व्यपगतार्चिषि भास्वति सलिलनेतुः प्रचेतसोऽनुषङ्गादिव तिग्मतां परित्यजति प्रतिदिवसमपि विरहितवसुरेव सविताऽयमभिसरति मामिति रुषेव रक्ताम्बरपरिग्रहवत्यां वरुणहरिति पतिविरह-विधुरनळिनीनिवहास्वादितासु मधुव्रतगरळगुळिकासु तपनास्तमय-कुशलवार्तामावेद्य समुद्बोधयितुं निजसुहृदं विचिन्वतीव समन्ततः शनैः सञ्चरति मरुति सन्ध्यार्चानिभृतेषु भूसुरेषु दीपपल्लवाङ्कुरेषु गृहाङ्गणेषु विहारनिरतेषु कामिजनेषु— ॥ २३ ॥

सूर्याग्निसन्तप्तसुराध्वभाण्डे सन्ध्या स्वरागात्मकशालिधान्यम् ।
इन्दूल्लकूर्चैरवलोडयन्ती नक्षत्रलाजान् सहसा चकार ॥ २४ ॥

वियद्द्रुमान्तर्भुवि रात्रिवायसी निशाकराण्डं विनिवेश्य पाण्डुरम् ।
कळङ्कशावाय सितोडुतण्डुलं पुरैव संगृह्य किलाभिरक्षति ॥ २५ ॥

इत्थं प्रसक्तमहरत्ययमासनस्थो
यावद्विलोक्य स धराधिपतिर्जहर्ष ।
तावद्व्यथामपि परां समवाप गीर्भि-
र्गन्धर्वयोर्वियति निर्गळितामिरित्थम् ॥ २६ ॥

इदं चित्रं चित्रं कनककुसुमपूजां नृपतिना
कृतां हित्वा साक्षादपि यदुगिरीशः श्रितनिधिः ।
यथालाभाभिख्यद्विजवरसपर्यां तु तुळसी-
दळैः क्लृप्तां दूरादपि शिरसि धत्ते यदधुना ॥ २७ ॥

अथ धर्मकेतुरुपपन्नसंशयो यदुशैलभर्तुरुपगम्य मन्दिरम् ।
तुळसीस्रजस्तु हरिमूर्ध्नि संधृताः स ददर्श हेमकुसुमं नकिंञ्चन ॥

अथ विचिन्त्य विचित्य च तं द्विजं कृतनमस्कृतिरेष महीपतिः ।
कथमुपाचरदार्य हरिं भवानिति शनैस्तमपृच्छदुपह्वरे ॥ २९ ॥

जीवेशयोर्गुणनिरूपणमप्युदारं भक्तिस्वरूपमुपचारविधिं च विष्णोः ।
एकादशीव्रतफलं तुलसीप्रभावं राज्ञे द्विजः स कृपयोपदिदेश तस्मै ॥

स धर्मकेतुः परयाऽथ भक्त्या पूजां तुलस्या परमस्य पुंसः ।
विधाय लेभे मुदमूर्जितां तद्यदुक्ष्माभृद्दयितप्रसादात् ॥ ३१ ॥

ग॥ एवमेव विविधकथारसपरिप्लावितहृदयास्ते दत्तात्रेयादयः समुत्थाय यदुभूधरमधिगतानि तत्तत्तीर्थक्षेत्राणि निरूप्य चैवं कथयामासुः ॥ ॥ ३२ ॥

हेयान् विहाय विषयान् प्रथमाश्रमस्थो
मत्वा समृद्धिमपि पद्मभुवस्तृणाय ।
यो विष्णुचित्तमुनिराडिह मुक्तिमाप
नारायणह्रदतटे तमुपास्महेऽन्तः ॥ ३३ ॥

वसिष्ठपुत्राः कुशिकात्मजस्य शापादवाप्य श्वपचत्वमुग्रम् ।
पलाशतीर्थस्य तटेऽत्र सर्वे शापाद्विमुक्ताः कृपया मुरारेः ॥ ३४ ॥

सीतारण्यमिहात्र किञ्च नयनक्षेत्रं पुरो दृश्यते
योगारूढनृसिंहमन्दिरमिदं क्षेत्रं वराहाकृतेः ।
ज्ञानाश्वत्थतरुश्च पञ्चभगवद्भक्ताश्रयक्षेत्रमप्यत्र
श्वेतमृदत्र पत्रिपतिना संस्थापिता राजते ॥ ३५ ॥

इति तत्र मुदावलोकमानाः मुनयोऽन्येऽपि वसन्ति यादवाद्रौ ।
वयमप्युपगम्य तं गिरीन्द्रं निवसामेत्यवदत्सनारदोऽस्मान् ॥ ३६ ॥

इत्युक्त्वा यदुशैलं तमभिगन्तुं समुत्सुकः ।
व्यासाद्यैस्साकमस्माभिः प्रतस्थेऽथ स नारदः ॥ ३७ ॥

पथि पद्मनाभपदपद्मसंभवां सरितं विलोक्य भरितास्तदा मुदा ।
मुनयो नयोज्ज्वलधियस्तितीर्षवस्तरणिं समारुरुहुराशु वैणवीम् ॥

अथ कर्णधारशतचोदिताऽपि नौः प्रबलेन चक्रपवनेन पीडिता ।
प्लवविप्लवैश्च बहुभिस्तदूर्मिभिः जनयांबभूव मुनिसंसदे भियम् ॥ ३९ ॥

गा॥ अथैतदखिलमपि भगवतो भार्गवीभर्तुरेव मायाबलेनेति निश्चितेन पराशरसुतेन चोदितेषु कर्णधारेषु विरहितप्रयतनेषु नौरियं स्वयमेव विस्मयप्रतीरयोस्तरणिमखिलमपि मुनिगणमारोपयामास ॥

गोदावरीतीरमथोपयातास्तपोधनाः स्नानविधिं विधाय ।
सन्ध्यामुपास्याच्युतमन्तरङ्गे निधाय तत्रैव सुखेन तस्थुः ॥ ४१ ॥

तत्रोञ्छवृत्तिरिति कश्चन दुर्विधोऽभू-
द्विप्रोऽतिथिप्रिय इति त्वपरो धनाढ्यः ।
मुक्त्वा तमाढ्यमपि सत्त्वगुणैर्विहीन-
मातिथ्यमापुरखिलाः मुनयोऽपरस्य ॥ ४२ ॥

दुर्वारगर्वभरितोऽप्यतिथिप्रियोऽसौ
बोद्धुं प्रवृत्तिमधनस्य तु तस्य गच्छन् ।
लक्ष्मीकृपात्तविभवं तमुदीक्ष्य गाधि-
पुत्रोपदेशविलसन्मृदुबुद्धिरासीत् ॥ ४३ ॥

त्वरया विलङ्घ्य सरणिं दवीयसीं हरिणैररण्यशरणैश्च कैश्चन ।
अनुयायिभिश्च मुनयः प्रपेदिरे यदुशैलशृङ्गमधिकोज्ज्वलं श्रिया ॥ ४४ ॥

पूर्वं कर्णपथंगतानि विविधान्यालोक्य तीर्थानि च
क्षेत्राण्यप्यतिमञ्जुळानि मुनयस्सर्वेऽपि साकं मृगैः ।
आनन्दाब्धिनिमज्जिता अपि पुनः कल्याणतीर्थे शुभे
स्नात्वा मन्दिरमिन्दिराप्रणयिनो नारायणस्यागमन् ॥ ४५ ॥

ग॥ अथ निरतिशयप्रमदपरवशाशेषसुरेशमुखाकाशचरसुन्दरीजनमधुरगीतिकथाविशदीकृतरमेशयशोविशेषे पतगेशोपशोभितकेतनस्तंभमणितोरणांशुजालप्रकाशिते द्वारदेश एव विधिवदुपरचितप्रणतयः प्राकारमभितः कृतप्रदक्षिणास्तपस्विनश्चमूरुसमूहसमाकुलितसमीपभागाः क्रमेण दिव्यसूरिगणमभिवन्द्य रमेशचरणाम्बुरुहसमीपमशिश्रयन् ॥ ४६ ॥

सौन्दर्यातिशयप्रतारितजहत्पक्ष्मक्रियाक्षिद्वय-
क्षिप्राप्तानिमिषत्वभक्तजनतासंसूचितप्राभवम् ।
लक्ष्मीवक्षसमिन्द्रनीलसुषमं लावण्यलीलागृहं
तं नारायणमादरेण मुनयो दृष्ट्वा न तृप्तिं ययुः ॥ ४७ ॥

मनोहरमुखाम्बुजो मधुरमन्दहासच्छला-
न्मुहुर्मदनमाधुरीं परिहसन्निवान्तर्मुखे ।
रमामुरसि पार्श्वयोरपि विधाय नीळां भुवं
महेषु विहरंश्च तैस्स समदर्शि रामप्रियः ॥ ४८ ॥

स्वच्छन्दं यदुशैलसानुषु कृतावासं महामायिनं
दैत्यं द्रागहिनामकं हृतवतीं युद्धे सलीलं स्वयम् ।
भक्ताभीष्टमनारतं प्रददतीं दिव्याब्जमध्ये स्थितां
पद्मां पद्मकराम्बुजामभयदामैक्षन्त ते तापसाः ॥ ४९ ॥

शाण्डिल्यस्स तु दर्भतीर्थनिकटे तप्त्वा तपो दुश्चरं
सन्तुष्टाद्यदुशैलभर्तुरखिलत्राणाय लब्ध्वा वरम् ।
आनीयोत्तरदिग्विशोभिबदरीक्षेत्रात्तदाख्यं तरुं
पूर्वं यं निदधे यदुक्षितिधरे तं च प्रणेमुस्ततः ॥ ५० ॥

चक्रं च शङ्खं कपिलं सुदासं बभ्रुं च पुण्यं पुलहं मनुं च ।
तथा धनुष्कोट्यभिधं च दृष्ट्वा तीर्थान्यदृष्टानि ननन्दुरेते ॥ ५१ ॥

तस्माद्यादवशैलोऽयं बहुधा नामभिस्स्वयम् ।
पुष्करः पद्मकूटश्च तथाऽऽनन्दमयश्च सः ॥ ५२ ॥

वैकुण्ठवर्धनक्षेत्रमिन्दिराक्षेत्रमेव च ।
दाक्षिणं बदरीक्षेत्रमित्यपि प्रणिगद्यते ॥ ५३ ॥

इति विविधकथाभिर्यादवक्ष्माधरेन्दोः
मनसि मुनिजनानां तद्दिदृक्षां प्रकल्प्य ।
तदनु सविनयं तैः शौनकः प्रार्थितस्सन्
पुनरपि यदुशैलं साकमेतैः प्रपेदे ॥ ५४ ॥

ग॥ तदनु विधिवदुपदर्शितेषु पुण्यसलिलेषु क्रमशः कृतस्नपनप्रमुखानखिलानपि मुनिमुख्यानानीय स शौनको मन्दिरमिन्दिराप्रणयिनस्तत्र च विचित्रमणिपीठमधिरूढस्य दिव्यासनकमलस्य कोमलिमानमप्यधरयता पदपद्मयुगळेन संभावितमणिमञ्जीरहंसकपरिकरं प्रणतजनसुलभविभूतिद्वयजयकाहळीशङ्कावहेन जङ्घायुगळेन विराजमानं रंभाकरभकरप्रियंभावुकेनोरुदेशेन भासमानं कटितटघटितकिङ्किणीकाञ्चीगुणोदरबन्धनोपशोभितं वक्षोगृहलक्ष्मीसमारोहणसोपानाळिभिरिव त्रिवळिभिरभिरञ्जितं श्रीवत्सकौस्तुभवनमालालंकृतमुरोगृहमधिरूढया जलधितनूजयोपगूढं केयूरकटककङ्कणालंकृतभुजगपतिभोगसदृशभुजदण्डचतुष्टयं अभयमुद्राभिव्यक्तसकलजगदवनैकतानताभिरामं सुदर्शनपाञ्चजन्यकौमोदकीपरिष्कृतपाणिपङ्कजं ग्रैवेयकव्याजाभिगुप्तगळसौन्दर्यं मरकतमकरकुण्डलमण्डितगण्डदेशं मन्दस्मितमधुरमुखारविन्दं मणिमकुटरुचिपरिमुषिततरणिशतकिरणप्रकरं पीताम्बरधरं जेतारमसुराणां त्रातारमवनतानां मातारं भुवनत्रयाणां समवायं सौन्दर्यस्य लीलागृहं लावण्यस्य कुलभवनं कारुण्यस्य नारायणं रामप्रियं च तस्यै मुनिसंसदे दर्शयामास ॥ ५५ ॥

ग॥ अथ तस्य पुण्डरीकाक्षस्य नारायणस्य निरुपमं रामणीयकं निर्वर्ण्य निरवधिप्रमोदोऽयमुपवर्णयामास शौनकमुनिः ॥ ५६ ॥

किं शिक्षिता मधुरता व्रजगोपिनेत्रैः
त्वन्मोहिनीत्वसमयादनुवर्तिता किम् ।
यन्मोहयत्यहह भक्तजनानपीदं
नेत्रं तवाब्जसदृशं यदुशैलनाथ ॥ ५७ ॥

एकं ते नयनं परिस्फुरति चेत्किंचित्तदोन्मेषणं
पद्मानामितराक्षिकान्तिमिळनादिन्दीवरोन्मीलनम् ।
एवं स्थावरवस्तुमोहकरणेऽप्युत्साहिनी लोचने
दृष्ट्वा भक्तजना इमे तव कथं मुह्यन्ति नैव प्रभो ॥ ५८ ॥

जलधिरिव वदनबिम्बं फणिपतिशय्येव तावकं नयनम् ।
त्वमिव च तन्मध्यगता लसदसितकनीनिका जयति ॥ ५९ ॥

औदार्यशान्तिकरुणारसपूरपात्र-
मन्तःप्रमोदभरसूचकमीक्षणाब्जम् ।
भक्तान्नु पृच्छति सुखं वचनं विना कि-
मर्चाकृतेरुचितमाचरतस्तवेदम् ॥ ६० ॥

येवाऽनीश्वरमेव चाहुरखिलं मत्वाऽपि तत्सेश्वरं
त्वां जानन्ति हरेण पङ्कजभुवा तुल्यं हठाद्येऽथवा ।
तान् सर्वान् नृमृगान् ग्रहीतुमुचिता दृग्वागुरा विस्तृता
तत्सौन्दर्यगुणैर्निबद्धमधुना मन्येऽखिलं विष्टपम् ॥ ६१ ॥

चित्रं चित्रतरं त्विदं बत महच्चित्रं समालोक्यतां
स्वैरं तिष्ठति यादवाचलगुहामध्ये हरिः कश्चन ।
आस्यं तस्य तु पुण्डरीकमथ तन्नेत्रद्वयं पश्यत
त्वेकं तत्सितघृष्टिमृक्षपतिमप्यन्यद्धरिद्घोटकम् ॥ ६२ ॥

नयन नय न तावन्मां परांकोटिमित्थं
तव निरुपमरूपं वर्णयन्तं यथेच्छम् ।
अहमतिकठिनात्मा कोमलात्कोमलं त्वं
किमपि बत भवेद्वा दृष्टिदोषापराधः ॥ ६३ ॥

---

हरिः– सिंहः, विष्णुश्च । आस्यं पुण्डरीकं, शार्दूलं कमलं च । एकं नेत्रं – ऋक्षपतिमपि सितघृष्टिं भल्लूकाधिपतिमपि श्वेतवराहमिति विरोधपक्षे । तत्परिहारपक्षे तु– सिताः घृष्टयः यस्य तं शुभ्रांशुम् । ऋक्षपतिं च– नक्षत्रेशमिति च । अन्यन्नेत्रं तु हरिद्घोटकम्– हरिद्वर्णाश्वं सूर्यं च पश्यतेत्यन्वयः । चन्द्रसूर्यौ च नेत्रे इति भावः ॥

8

मूढात्माऽहं निरवधिमदः पातकी वीतलज्जो
याचे किञ्चिद्यदुगिरिपते मङ्गळाशासनार्थम् ।
त्वन्नेत्राभ्यामसकृदपि मद्दृष्टिदोषापनुत्त्यै
पूर्वाचार्यैरचितमुचितं मङ्गळं यत्तदस्तु ॥ ६४ ।

अस्तोद्यत्तपनं तदोदितविधु द्वित्रोल्लसत्तारकं
सायाह्ने गगनं घनान्तरगळत्सौदामिनीसंयुतम् ।
वक्त्रं वारिजलोचनं हसति ते नासाललाटस्थल-
न्यस्तश्रीघनसारविन्दुरुचिरं मध्योल्लसत्कुङ्कुमम् ॥ ६५ ॥

कुचसूचककृष्णविम्बयुग्मं तव वक्षोभुवि हन्त संविभाति ।
कमनीयतरे करोपधाने इव क्लृप्ते हृदयालयेन्दिरायै ॥ ६६ ॥

ग॥ इति वहुतरानितरसुलभमधुरतरमुनिवरफणितिनिशमनपर-
वशयदुगिरिपतिपरमकरुणारसपात्रीभूतस्सकलमुनिगणपरिवृतस्स शौनक-
मुनिरथ गिरिशिखरतलमपि समधिरुह्य ॥ ६७ ॥

प्रह्लादेन सुतेन सन्ततमुपन्यस्तानि तत्त्वाक्षराण्यस्मिन्
दुष्टतमस्य चेतसि रिपोर्लग्नानि वा नैव वा ।
इत्युन्मील्य दृशौ सुदूरमथ यो भित्वाऽस्य वक्षो
नखज्वालापञ्चकदीपिकां प्रचुरयन्नन्वैषतेवैक्षत ॥ ६८ ॥

योगासनस्थं नरसिंहरूपं नारायणं तं प्रणिपत्य भक्त्या ।
तद्भक्तवात्सल्यगुणं विचिन्त्य प्रकाममन्तः प्रमदं प्रपेदे ॥ ६९ ॥

तुष्टाव चैवम् ।

नखरा अपि ते खराः य आसन्
हृदयोद्भेदविधौ हिरण्यकस्य ।
त इमे दधते च शोणकान्तिं
तदसृक्सङ्गमतः किलाब्जनेत्र ॥ ७० ॥

स्तम्भान्तरादपि जनिं मनसाऽप्यचिन्त्यं
रूपं कराळनखराग्रशितायुधं च ।
प्रह्लादमेकमभिरक्षितुमेव गृह्णन्
तादृग्रिपुं समवधीर्नृहरे नमस्ते ॥ ७१ ॥

ग॥ इति भगवतो नरहरेस्सन्दर्शनेन सन्धुक्षितामन्दानन्दास्तं सुविस्तरस्तोत्रवचनैः संस्तूय निरस्तसमस्तप्रकृतिविकृतयस्सुकृतिनस्ते मुनयस्तत्रैव यदुगिरिभुवि भगवतो नारायणस्य सेवारस एव समुत्सुकमनसस्समभवन् ॥ ७२ ॥

इति यदुगिरिशृङ्गे नित्यमुक्तैरलभ्यां
परमपुरुषसेवासम्पदं साधयन्ती ।
मुनिततिरतिवेलं सा समासाद्य मोदं
न्यवसदपि परं तद्व्योम मत्वा तृणाय ॥ ७३ ॥

इति श्रीयदुशैलनिवासिना जग्गु-शिङ्गरार्येण विरचिते
श्रीयदुशैलचम्पूप्रबन्धे
पञ्चमः प्रपञ्चः



॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

## षष्ठः प्रपञ्चः

अथ व्यतीते सुमहत्यनेहस्ययं गिरीन्द्रस्समयानुरोधात् ।
लोके समृद्धिर्नहि शाश्वतेति वदन्निवारण्यमभूत्प्रभूतम् ॥ १ ॥

धृत्वाऽपि माधवमहर्निशमन्तरङ्गे
मुक्तो बहिस्समभवं ननु डम्बरेण ।
एकान्तवृत्तिरुचिता मम सर्वथापी-
त्यालोच्य किं यदुगिरिर्निभृतो बभूव ॥ २ ॥

प्रागेव श्रीशसान्निध्याद्विविक्तोऽपि विविक्तताम् ।
पुनरप्यद्य संप्राप पर्वतः सर्वतोऽप्यसौ ॥ ३ ॥

तरक्षुकिटिगण्डकप्लवगभल्लुकेहामृगा-
द्यनेकमृगसञ्चयैः परिवृतो यदुक्ष्माधरः ।
स्वकीयशिखरेऽनिशं स्थितिजुषो नृसिंहाकृते-
र्हरेरिव मृगेन्द्रतां प्रकटयंस्तदाऽवर्तत ॥ ४ ॥

महागमप्रान्तचरैरनेकैः प्रकाशितश्रुत्यभिरामवाग्भिः ।
द्विजैरुपेतः परितोऽयमद्रिः पुरा यथाऽद्यापि तथा चकास्ति ॥

तदन्तरे श्रीपतिना फणीन्द्रो वैकुण्ठलोके भुवनावनाय ।
सञ्चोदितश्शीर्षसहस्रशृङ्गविन्यस्ततच्छासनभार आसीत् ॥ ६ ॥

पादाभावेऽपि मधुरश्लोकोऽयं भुजगेश्वरः ।
भूमाववतितीर्षुस्सन्नभूद्भुवनभाग्यतः ॥ ७ ॥

आसीद्भूतपुरीति नाम नगरी यज्वाऽवसत्केशवा-
भिख्यस्तत्र विपश्चिदस्य तु सती श्रीकान्तिमत्याह्वया ।
पुत्रार्थं तपतोस्तयोरभिमतं यच्छन्नसौ भोगिराट्
संसारे भ्रमतां हितं कलयितुं प्रादुर्बभूव प्रभुः ॥ ८ ॥

जन्मशैशवमुखं च विकारं प्राणिनां चिरनिबद्धमसह्यम् ।
किं स्वयं समनुभूय नुनुत्सुर्भोगिराडवततार दयालुः ॥ ९ ॥

अथ कालेषु विधिवत्पितृक्लृप्तशुभक्रियः ।
रामानुज इति ख्यातो बभौ शास्त्रेषु शिक्षितः ॥

अथोपनीतश्च विवाहितश्च प्रशस्तकालेषु मुदा पितृभ्याम् ।
रामानुजोऽसौ सुखमास नित्यं कालं क्षिपन् दर्शनदर्शनेन ॥ ११ ॥

ग॥ तदनु करिगिरिनगरीमधिवसन्तं यादवप्रकाशमसङ्काशं विपश्चितं विनिश्चित्य तच्छात्रभावमवलम्ब्य क्रमशः निजप्रभाप्रतिभामहिमादिभिरभिभूतेम परमसहमानेन गङ्गायात्रामिषेण गूढं हन्तुकामेन तेन सहानुयातोऽयं रामानुजो मध्येपथं स्वपितृष्वसृतनयप्रतिबोधितो निभृतं विनिवृत्त्य पिपासितयोश्शबररूपिणोरमावरदराजयोः प्रभावेन काञ्चीं पुनरपि प्रतिपद्य शालकूपात् भगवतः पानीयानयनकैङ्कर्यधुरीणो बभूव ॥

पश्चादासाद्य काञ्चीं पुनरपि कुटिले यादवे सान्त्ववाग्भिः
कृत्वात्मानं विशेषात्सुहृदमुपदिशत्यादरात् श्रौतमर्थम् ।
कप्यासश्रुत्यपार्थं वदति चकितधीस्तत्र रामानुजोऽसौ
तत्साध्वर्थं प्रकाश्य प्रकुपितमनसा तेन निर्यासितोऽभूत् ॥

श्रीरङ्गे वसतोऽथ यामुनमुनेराकारणाल्लक्ष्मणः
पूर्णार्येण समेत्य तन्नगरतो दृष्ट्वा बहिस्तं मृतम् ।
तद्भावार्थनिबोधनेन सहसा तस्याङ्गुलीः कुञ्चिता-
स्तिस्रोऽपि प्रविमोच्य रङ्गमनवाप्यायातस काञ्चीं शुचा ॥

व्याजैस्तु कैश्चित्तदनु स्वपत्नीं विहाय साध्वीमपि लक्ष्मणार्यः ।
निजावतारं सफलीकरिष्यन् तुर्याश्रमं तत्र समाललम्बे ॥ १५ ॥

यतिराजाख्यविरुदं लब्ध्वा वरदनिर्मितम् ।
कूरेशदाशरथ्यादिशिष्यैरेष व्यराजत ॥ १६ ॥

तं यादवं चापि विधाय शिष्यं यतीश्वरस्साधुगुणैर्विनीतम् ॥
हस्त्यद्रिनाथेन समर्पितोऽभूदाकाङ्क्षमाणाय च रङ्गनेत्रे ॥ १७ ॥

आसाद्य रङ्गनगरीं दृष्ट्वा तस्याः श्रियं स यतिराजः ।
दिष्ट्या दृष्टेति मुदा तुष्टावेत्थं सशिष्टजनसङ्घः ॥ १८ ॥

कलानिधिः शुद्धतमा पुरीयं श्रीरङ्गनाम्नी शशिमूर्तिरेव ।
यत्र स्फुरन्मेचककायकान्तिस्सारङ्गमूर्तिस्सुतरां चकास्ति ॥ १९ ॥

ग॥ अथ रङ्गनाथप्रहितमहितामितातपत्रचामरादिनिजविरुदजातै-रनुगम्यमानस्समुपगम्य मन्दिरं भगवतो रङ्गशायिनः प्रणम्य प्रतिपद्य च तदीयप्रसादादिकं विभूतिद्वयनायकाख्यविरुदं च पञ्चाचार्यपदाश्रयोऽयं रामानुजः श्रीभाष्यादिमहाग्रन्थान् संसृतिग्रन्थिनिहन्तॄन् निखिलावनी-तलावनाय निर्माय सकलमवनीतलं पादपरिचयपवित्रितं परिक्रम्य शारदादत्तभाष्यकाराभिधश्शेषाचलाधीशस्य शङ्खचक्रे च समर्प्य दिगन्त-विश्रान्तकीर्तिस्समुदजृम्भत ॥ ॥ २० ॥

भूम्यां तदा कोऽपि च नास्ति नास्तिको
नावैष्णवो नापि च नारकास्पदम् ।

भेदो विभूतिद्वितयस्य नाभवत्
रामानुजेऽस्मिन् प्रथिते जगद्गुरौ ॥ २१ ॥

अन्यांश्च दृष्ट्वाऽस्य गुरोर्महिम्नो विशङ्क्य लीलाविभवक्षयं च ।
ससर्ज रङ्गाधिपतिर्नृशंसं चोळेश्वरं कञ्चन वैष्णवारिम् ॥ २२ ॥

ग॥ तदनु निर्बन्धमात्रसाधनीयनिजपक्षस्य चोळराजस्य पीडनेन शिष्यजनपरिवृतोऽयं यतीश्वरो निजगुरुशिष्याभ्यां पूर्णार्यकूरनाथाभ्यां केवलं विरहितस्समनुद्रवतश्चोळभटान् मन्त्रितवालुकाप्रकिरणेन निरुध्य वन्येन पथा निर्गत्य शबरावासं कञ्चनाचलमाससाद ॥ २३ ॥

ग॥ तदानीमेव पथिकजनवितथमनोमथनपृथुलमन्थनायमान-पाथोधरनिकरपरिष्कृतसुरपथः कलकण्ठनीलकण्ठकुलपटुनटनपरिशिक्षण-चटुलतटित्पटलः आसारनीरपूरकर्दमितदुश्चरकच्छभागः दिवान्धंकरणेऽपि चतुरो निशायुगीकरणेऽपि निपुणश्शिलामृदूकरणेऽपि कुशलः कोऽपि समयस्समुदजृम्भत ॥ ॥ २४ ॥

वा॥ तदानीं तु ॥

अदृष्टहंसागमनावस्पष्टाब्जावलोकनौ ।
आस्तामाकाशकासारौ समानौ प्रावृडागमे ॥ २५ ॥

पांसुषु स्रुतिरपां सुषुवे प्राक्छान्तिसौरभगुणं जलदत्तौ ।
सत्पथस्थितिजुषः स्वयमेत्य क्षुल्लकेष्वपि गुणं जनयन्ति ॥

तदा श्यामळरुक्पङ्क्तिकन्धरानिलजातयोः ।
सङ्घर्षणे कबन्धाढ्या लङ्केवासीद्धराऽखिला ॥ २७ ॥

नायं मेघः कालसर्पोऽन्तरिक्षे नेयं विद्युन्निस्सृता तस्य जिह्वा ।
यस्मात्सर्वत्रोद्गिरत्येषवेगात् क्रोधाविष्टस्स्वं विषं सप्रणादम् ॥ २८ ॥

अम्बरान्तस्समुज्जृम्भत्पयोधरमनोहराः ।
ननन्द वर्षाः संवीक्ष्य शिखण्डिकुलमप्यहो ॥ २९ ॥

तत्र नीरदमुखावलोकनादप्यतीव मदमापुरङ्गनाः ।
कामुकी जगति जातुचित्स्वयं जायते नहि विवेकशालिनी ॥ ३० ॥

ग॥ तादृशेषु प्रावृषेण्यवासरेषु शीतवातादिभिः परिक्लेशितस्स-यतिपतिस्तत्र निखिलैरनुयायिभिस्समङ्गीकृत्य शबरकृतसपर्यां पश्चिम-यैव दिशा वह्निपुष्करिणीं मिथिलाभिधां पुरीं सालग्रामक्षेत्रं च पदपद्म-परिचयेन पवित्रीकृत्य नृसिंहक्षेत्रमपि समाजगाम ॥ ॥ ३१ ॥

तत्राभिवन्द्य नरसिंहमुपास्यमन्त्रं तच्चोळराजमरणे रचितप्रयत्नः ।
कृत्वाभिचारकविधिं च यतीश्वरोऽसौ लोकावनैकफलतां प्रकटीचकार ॥

द्रष्टुं भक्तग्रामपूर्णं सुशिष्यं भक्तग्रामं प्राप्य पश्चाद्यतीशः ।
लब्ध्वा भक्त्या कल्पितां तत्सपर्यां कञ्चित्कालं तत्र शिष्यैरुवास ॥

तत्राभवद्विट्ठलदेवनामा राजाऽश्रितो बौद्धगुरुं चिरेण ।
जग्राह रक्षस्तु सुतां तदीयां मन्त्रौषधैरप्यनवाप्तबाधम् ॥ ३४ ॥

बौद्धान् गुरून् भोजयितुं गृहे स्वे तान् प्रार्थयामास नृपः कदाचित् ।
ढिल्लीश्वरेणासि जितोऽङ्गहीनस्त्वमित्यनादृत्य नृपं जहुस्ते ॥ ३५ ॥

तदनु सपदि भक्तग्रामपूर्णेन तेन स्वयमधिकदयेन प्रेरिता राजपत्नी ।
पतिमवददमेयप्राभवो यत्यधीशः सशरणमुपगम्यः श्रेयसे नस्त्वयेति ॥

तथेत्यभ्युपेत्य क्षितीन्द्रो यतीन्द्रं
निनायात्मगेहं मुहुः प्रार्थ्य भक्त्या ।
स रामानुजार्योऽनुजग्राह शिष्यं
पदाम्भोजतीर्थप्रदानान्महीशम् ॥ ३७ ॥

इत्थं समाश्रितजनान् परिपातुकामो
रामानुजो नगरवासमपि प्रकल्प्य ।
राज्ञस्सुतां ग्रहहृतामपि पादतीर्थ-
दानेन मुक्तविपदं कृपया चकार ॥ ३९ ॥

तादृङ्महिम्ना विनतो विशेषान्नृपस्सहात्मीयजनैर्यतीन्द्रम् ।
संश्रित्य लेभे सुकृती स पञ्चसंस्काररूपं विभवं दुरापम् ॥

विष्णुवर्धन इत्याख्यां गुरुदत्तां प्रपद्य सः ।
नृपतिर्नितरां रेजे सात्त्विकीं वृत्तिमाश्रितः ॥ ४० ॥

तदनु विदितवृत्तानावृतान् वाददक्षान्
दशगुणितसहस्राण्युद्धतान् बौद्धमुख्यान् ।
सपदि यवनिकान्तःक्लृप्तशेषस्वरूपो
यतिपतिरयमेको यौगपद्येन जिग्ये ॥ ४१ ॥

चित्रं वृत्तमिदं विलोक्य कतिचिद्बौद्धा भिया दुद्रुवुः
केचित्तं शरणं ययुः शठधियः केचिद्व्यनश्यन् हताः ।
लीलामानुषविग्रहो यतिपतिस्त्वेवं प्रकाश्य स्वकं
माहात्म्यं करुणाकरः श्रितजनान् तत्रोषितोऽत्रायत ॥ ४२ ॥

समाहृतश्वेतमृदस्समाप्त्या तदोर्ध्वपुण्ड्राय सचिन्तमेनम् ।
स्वप्नेऽवदद्यादवशैलनाथो मां तत्र मृत्स्नां च समुद्धरेति ॥ ४३ ॥

वाचा तया यादवशैलनेतू रामानुजार्यो मुदितः प्रबुद्ध्य ।
तस्मै नृपायाखिलशिष्यमध्ये सर्वं जगाद स्वपनस्य वृत्तम् ॥

ग॥ तदनु तदनुपदमेव समुदितत्वरो यतीश्वरो नरेश्वरेण सह गहनमवगाह्य नरपतिचोदितदूतशतविरचितातिसुखचरपथेन प्रतिपद्य

यदुगिरितटमवगाह्य च पयसि वेदपुष्करिण्याः पुरा दत्तात्रेय इव परिधानशिलातले परिगृह्य च काषायवाससं समन्ततोऽन्विष्याप्यनधिगतरमापतिस्थितिरतितरां सन्तताप ॥ ॥ ४५ ॥

श्रुत्वा स्वप्नवचो हरेः पुनरिदं कल्याणतीर्थादवा-
ग्दिग्भागे बहुशोऽस्ति चम्पकतरुव्यूहस्तु तस्यान्तिके ।
कश्चिच्छ्रीतुलसीतरुश्च तदधो नाकुस्तदभ्यन्तरे
द्रष्टव्योऽहमिति प्रसन्नमनसा सोऽयं विचेतुं ययौ ॥

तथैव दृष्ट्वा सकलं यतीशो वल्मीकमृत्स्नां च शनैर्विदार्य ।
नारायणं कञ्चनकान्तिसिन्धुं समुद्दधारोद्धरणाय नृणाम् ॥ ४७ ॥

स्थिरा[1] श्रुतिस्सारतयोपपन्नं बिभर्ति नारायणमन्तरङ्गं ।
इत्युक्तसिद्धान्तमसौ यतीन्द्रः प्रत्यक्षमत्र प्रकटीचकार ॥ ४८ ॥

तुष्टाव चैवम् ॥

वल्मीकमध्ये वसतिश्चिरेण विचित्ररूपोत्तमभोग[2]भाजः ।
मरुद्भुज[3]श्चन्दनलोलुपस्य हरेऽनुरूपा किल चक्रिण[4]स्ते ॥ ४९ ॥

पयसैव गवामथाभिषिच्य प्रथमं तं पुरुषं यतीश्वरोऽयम् ।
करिशैलफणीन्द्रशैलरङ्गप्रभुसेवाप्रमदं लघुं चकार ॥ ५० ॥

---

१. थिरा श्रुतिः — स्थिरा - शाश्वती, श्रुतिः - उपनिषत् । स्थिरायाः — धरायाः, श्रतिः - श्रोत्रं वल्मीकं चेत्यर्थः ॥

२. भोगभाजः — भोगः सर्पशरीरं सुखं च, तद्भाजः ।
३. मरुद्भुजः — मरुतं भुङ्क्ते इति मरुद्भुक्, वाताशनः । मरुतः देवान्, भुनक्ति - रक्षतीति मरुद्भुक् सुरपरिपालकश्च तस्य । ४. चक्रिणः - चक्रिशब्दवाच्यस्य व्यालस्य, चक्रायुधधरस्य च ॥

तथाऽसौ मौनीन्द्रस्सकलजगतीपुण्यनिचयैः
यदुक्ष्माभृच्छृङ्गे स्थितमसितकान्तिं निरुपमम् ।
पयःपूरासेकप्रकटितमहानर्घसुगुणं
शिरोधार्यं सर्वैर्युगपदुपलेभे मणिवरम् ॥ ५१ ॥

पयःपारावारावसथपरिलग्नोर्मिवलय-
भ्रमाधायिश्वेताम्बरपरिलसत्कच्छकरणम् ।
निजोज्जृम्भच्छय्याभुजगपतिनिर्मोकधवळं
दधानं सव्यानं हृदि तु वनमालामपि रमाम् ॥

किरीटग्रैवेयाङ्गदमणितुलाकोटिरशना-
द्यनेकालङ्कारैः परिकलिततत्तत्स्ववयवम् ।
चतुर्भिर्हस्तैः श्रीकुचकलशकाठिण्यचपलैः
गदां शङ्खं चक्रं भयहरणमुद्रां च दधतम् ॥ ५३ ॥

मुखेन्दोरामन्दस्मितसितसुधासारसहितैः
प्रसन्नैरालोकैर्विनतजनतानन्दजनकैः ।
दयार्द्रान्तर्वृत्तिप्रकटनपरं श्रीसहचरं
प्रपश्यन् मोदाब्धेर्न समभजदन्तं यतिपतिः ॥ ५४ ॥

मृदमपि तथैव लब्ध्वा धृत्वा सम्यक्तयोर्ध्वपुण्ड्राणि ।
स्वयमानर्च रमेशं दिनत्रयं तत्र यतिराजः ॥ ५५ ॥

प्राकारगोपुरमुखैस्सुभगं विशालं
शास्त्रोक्तवद्भगवतो भवनं प्रकल्प्य ।
तं पाञ्चरात्रगतसात्वतसंहितोक्त-
रीत्या हरिं यतिपतिस्समपूजयत्सः ॥ ५६ ॥

पुरीं पुरेवातिमनोहरां च प्रकल्प्य नारायणपूरभिख्याम् ।
वर्णैश्चतुर्भिर्हरिपादसेवाकृते यतीन्द्रोऽयमपूरयत्ताम् ॥ ९७ ॥

अथोत्सवस्योचितमिन्दिरेशं विचेतुकामो हृदि चिन्तयन् सः ।
स्वप्ने रमेशस्य वचोऽशृणोत्त्वं ढिल्लीश्वरात्तं समुपानयेति ॥ ९८ ॥

विष्णुवर्धनमहीशसहायश्शिष्यसङ्घवृत एष यतीशः ।
तां क्रमेण समवाप च ढिल्लीं यत्न एव हि सतां फलदायी ॥

ढिल्लीश्वरस्सयवनस्स्वपुरीं समीक्ष्य
सङ्ख्यातिगैर्यतिवरानुचरैः परीताम् ।
हेतुं विचार्य च तदागमनस्य पश्चा-
त्तं लक्ष्मणार्यमनयत्स्वगृहं प्रणम्रः ॥ ६० ॥

आनीताः प्रतिमाः पुराऽन्यविषयान्निर्जित्य तेभ्योऽपि या-
स्तास्सर्वाश्च यतीश्वराय नृपतिस्सन्दर्शयामास सः ।
तासु स्वाभिमतामलभ्य भगवन्मूर्तिं स रामानुज-
श्चिन्तादन्तुरितान्तरङ्गमनयद्ध्यानेन नारायणम् ॥ ६१ ॥

तदानीं तु—

शुद्धान्ते यवनाधिपस्य तनयां मन्दस्मितान्दोलितैः
प्रेमाकूतविलोकनैः कुटिलितभ्रूचेष्टितैर्वञ्चयन् ।
कस्तूरीतिलकोज्ज्वलाननशशिस्फीतद्युतिन्यक्कृत-
प्रासादान्तररत्नभित्तिसुषमो रामप्रियः क्रीडति ॥

गृह्णन् दिवाऽर्चाकृतिमेव नक्तं क्रीडानुकूलां विभवाकृतिं च ।
रामप्रियोसौ रमते स्म राज्ञः पुत्र्या तया स्मेरदृशानुवेलम् ॥

स्वयं लक्ष्मीस्समुत्पन्ना यवनाधिपमन्दिरे ।
रामप्रियस्य विरहं सहते स्मापि न क्षणम् ॥ ६४ ॥

युष्माकं भगवानिहास्ति यदि सोऽप्याकारितः किं स्वयं
नायातीति हसत्यमुं नरपतौ रामानुजो योगिराट् ।
ध्यानेन प्रतिबुद्धय सर्वमपि तद्रामप्रियानुग्रहात्
शुद्धान्तान्तिकमाससाद मुदितस्तेनैव राज्ञा सह ॥ ६९ ॥

प्राप्यावरोधनिकटं यतिराज एष
रामप्रियेति मधुरोक्तिभिराजुहाव ।
मञ्जीरनादमधुभिः श्रवणानि सिञ्चन्
सोऽप्यङ्कमेत्य निषसाद यतीश्वरस्य ॥ ६६ ॥

चिरादनवलोकितं पितरमाशु दृष्ट्वाऽर्भको
यथैव निजकेलिभिर्विरहितोऽङ्कमारोहति ।
तथा यवननन्दिनीमपि विहाय रामप्रियो
न्यषीददतिकोमले यतिवराङ्कदेशे स्वयम् ॥ ६७ ॥

वैकुण्ठलोके शयनं हरेर्यस्तदङ्गसंस्पर्शसुखस्य वेत्ता ।
स एष रामप्रियकोमलाङ्गसम्पर्कसौख्याद्विवशो बभूव ॥ ६८ ॥

आश्चर्यमेतदिति निर्निमिषेक्षणेन
संपश्यतां धुरि समस्तनृणां यतीशः ।
आलिङ्ग्य गाढमतिवेलमुदाऽजुहाव
सम्पत्कुमार भगवन् मम जीवितेति ॥ ६९ ।

ववर्ष नभसस्सुमं सुरगणस्तदा संभ्रमा-
ज्जयध्वनिपरंपरां नृपगृहेऽपि सर्वो जनः ।
सलक्ष्मणमुनिस्स्वयं प्रमदजातबाष्पामृतं
कृपारसझरीं तथा स भगवांश्च सम्पत्सुतः ॥ ७० ॥

पितामहादीनपि यस्य पुत्रान्विदुः स रामप्रिय एव तादृक् ।
सम्पत्कुमारो यतिराजसूनुरिति प्रसिद्धो भुवने बभूव　॥ ७१ ॥

आनेतुं यदुभूधरं यतिपतौ सम्पत्कुमारं ततो
राजानं परिपृच्छ्य तत्कृतमहामोघोपदे प्रस्थिते ।
बाष्पाविद्धकपोलकुङ्कुमलतासंवर्धितापाटल-
प्रम्लानाननपङ्कजा नृपसुता सा हन्त मोहं ययौ　॥ ७२ ॥

यवननरपतिस्सुतां विहस्तां न हि किल सान्त्वयितुं तदा शशाक ।
प्रियतममनुयातुमेनमिच्छोर्निजदुहितुर्विरहं विसोढुमेव ॥

आरोप्य रत्नरुचिरं चतुरन्तयानं
सम्पत्कुमारमपि तां तनयां च राजा ।
दत्वा यथेच्छमपि यौतुकमादिपुंसे
प्रास्थापयत्तदनु मङ्गळतूर्यघोषैः　॥ ७४ ॥

भ्रात्रा च स्वयमनुयायिना बलौघैः
साक्षाच्छ्रीर्यवनसुता प्रहर्षणीयम् ।
गच्छन्ती यदुगिरिमेत्य वल्लभेन
प्राप्यैक्यं न हि ददृशे जनैस्तदानीम्　॥ ७५ ॥

यवनेशसुतादिभिश्च शिष्यैस्सह तच्चित्रमवेक्ष्य विस्मितेन ।
यतिनामधिपेन सैव हेम्ना रचिता श्रीशपदान्तरेऽभिषिक्ता ॥

स्थानेहि तत् ॥

सकलभुवनमाता विश्रुताऽहं समस्तै-
रयमपि चरणोऽस्मद्भर्तुरुक्तस्तथैव ।
इति किल परिचिन्त्य श्रीरियं सैव चक्रे
हरिचरणसरोजाभ्यन्तरे नित्यवासम्　॥ ७७ ॥

संप्रोक्षणादिविधिचोदितमारचय्य
सम्पत्सुताय महिषीसहिताय तस्मै ।
नारायणस्य पुरतोऽभिषिषेच देवं
सर्वोत्सवप्रभुपदे यतिराज एनम् ॥ ७८ ॥

प्रत्यागतस्य तनयस्य गिरा विदित्वा
वृत्तं तदद्भुतमसौ यवनेश्वरोऽपि ।
चिन्तारसानुसृतभक्तिभरो विशेषा-
त्पुत्र्यै समार्पयदथाऽऽत्मसमस्तकोशम् ॥ ७९ ॥

यवनेशसमर्पितां समृद्धिं विनियुञ्जंश्च यथोचितं यतीशः ।
यदुगिर्यधिपोत्सवैरजस्रं कृतकृत्यस्समयं सुखं निनाय ॥ ८० ॥

सम्पत्कुमारानयने सहायाः यद्वर्णबाह्या अपि संबभूवुः ।
दिनत्रयं ब्रह्ममहे रमेशगेहप्रवेशं स ददौ तदेषाम् ॥ ८१ ॥

मठं कृत्वाऽऽत्मनस्तत्र वसन्नेष यतीश्वरः ।
श्रीभाष्यादीनुपादिक्षच्छिष्येभ्यः श्रीशमन्दिरे ॥ ८२ ॥

श्रीरङ्गादुपगम्य केषुचिदमुं कल्याणतीर्थान्तिके
दृष्ट्वा ब्रह्मवरेषु चोळनृपतेर्मृत्युं वदत्सु स्वयम् ।
तत्कल्याणवचस्सुधाश्रवणतः प्रीत्या समालिङ्ग्य तान्
शंसन् तत्सरसोऽभिधां यतिपतिर्नीरन्ध्रहर्षोऽभवत् ॥

अथ तद्गिरिशृङ्गमेत्य योगासनरूढं नरसिंहमत्युदारम् ।
प्रणिपत्य निगद्य चोळवृत्तं प्रणतत्राणगुणं शशंस तस्य ॥ ८४ ॥

एवं गुरुर्द्वादशवत्सरान् स रङ्गाधिनेतुर्विरहं विषह्य ।
तत्पादपद्मेक्षणलालसस्सन् शिष्यानिदं सान्त्ववचो बभाषे ॥ ८५ ॥

गन्तास्मि रङ्गनगरं सुहृदस्समस्ताः
कामादिदोषरहिताः हृदि भक्तियुक्ताः ।
यद्वद्रिनाथचरणाम्बुरुहार्चनैक-
सक्तास्सुखं वसत यूयमिहैव नित्यम् ॥ ८६ ॥

योऽपि कोऽपि कलुषी विशेषतः पामरोऽपि वसतीह भूधरे ।
तस्य हस्तगतमेव तद्ध्रुवं श्रीशनित्यविभवं दुरासदम् ॥

इत्युक्ता अपि तेन ते स्वगुरुणा तत्पादसेवारसा-
द्विश्रान्तिं परिचिन्त्य शोकजलधेः पारं यदा नो ययुः ।
धीमानेष निजावतारपिशुनां निर्माप्य चार्चाकृतिं
स्वां शक्तिं विधिवन्निधाय च ततः तेभ्यो नतेभ्यो ददौ ॥

मयीव भक्तिः क्रियतामिहापि शङ्का न कार्या मम विप्रवासे ।
अनादरः श्रीशपदोपचारे कदापि मास्त्वेष ममोपकारः ॥ ८९ ॥

काकोदरं हि शयनं कथयन्ति यस्य
काको दरं परिजहौ करुणारसेन ।
काकोदरं न समदर्शयदम्बुकेळ्यां
का को दरं च कुरुते न हि तत्र भक्तिम् ॥ ९० ॥

ततो यूयमिमामाज्ञां मम यत्नेन संश्रिताः ।
भक्त्याऽर्चयत लक्ष्मीशमिति प्राहासकृन्मुनिः ॥ ९१ ॥

स्वयं रमेशाङ्घ्रिसरोजसेवारसैकनिष्ठाः यतिराजशिष्याः ।
गुरोर्निदेशात्पुनरुक्तरागाः यद्वद्रिनाथप्रवणाः बभूवुः ॥ ९२ ॥

गुरोरर्चाकृतिं लब्ध्वा प्रत्यक्षं तमिव स्थिताम् ।
अजहद्वैभवां शिष्यास्तामानर्चुर्मुदाऽन्वहम् ॥ ॥ ९३ ॥

प्रेम्णा तेन यतीशेन लोकभाग्यात्समुद्धृतः ।
तदाऽसीद्यदुशैलोऽयं यतिशैल इतीरितः ॥ ९४ ॥

सुज्ञानं भुवि सर्वतोमुखमभून्नष्टः कुदृष्टिव्रजः
श्रीरङ्गादिरमेशदिव्यनिलयास्संरक्षिताश्शाश्वतम् ।
रत्नं यादवशैलशृङ्गकुहरे लीनं चिरादुद्धृतं
स्वर्णेनापि सुयोजितं यतिपतौ लोकावनैकस्पृहे ॥ ९५ ॥

तदन्वसौ लब्धयदुक्ष्माभृन्नाथाऽभ्यनुज्ञो यतिसार्वभौमः ।
प्रस्थाय कृच्छ्रेण समेत्य रङ्गं तन्नाथसेवां कुरुते स्म नित्यम् ॥

नारायणस्स भगवान् प्रणतार्तिहन्ता
सम्पत्सुतश्च सकलेप्सितदानशीलः ।
नित्यश्रियं यदुगिरौ यतिराजदत्ता-
मासाद्य तौ विहरतो विभवैरजस्रम् ॥ ९७ ॥

---

किंवाऽधीतमनेन हन्त यतते मूढोऽप्यवाप्तुं यशो
वाग्देवी निहता बतेदृशजनैरित्याहुरेके जनाः ।
नैपुण्यं पुनरेतदेव यदसावज्ञोऽप्यतानीन्नवं
रम्यं काव्यमितीरयन्ति गुणिनो लोको हि भिन्नाशयः ॥

अहमिह नहि शक्तः काव्यकार्ये तथापि
व्यरचयमधिनेतुः श्रीपतेराज्ञयैव ।
मयि न लगति निन्दा स्तोत्रवाणी च नृणा-
मिति नियतमतेर्मे निन्दया श्लाघया किम् ॥ ९९ ॥

तथाहृगासेचनकातिरूपराशिं रमेशं मुहुरीक्षमाणः ।
इहाहमुन्मत्त इव प्रवृत्तो जनापहास्यास्पदतामपश्यन् ॥ १०० ॥

सीमातीतवचोवने कविपुलिन्दालोडिते स्पर्धया
तत्तीक्ष्णप्रतिभात्मजालविलुठद्भावादिनानामृगे ।
जग्धाशेषरसे किमप्यभिनवं संप्रेप्सुना साधनै-
र्हीनेनाप्यमुना मया मृगगणो लुब्धेन लब्धः कियान् ॥

न तु श्लाघ्या नूनं कृतिरियमथापि श्रमविदो
विदांकुर्वन्त्येनां प्रकटितरमानाथचरिताम् ।
स्वयं शुक्तिः काङ्क्षापदविरहिता प्रेक्षितगुणैः
प्रतिग्राह्या सैव स्फुरदनघमुक्ताफलभरा ॥ १०२ ॥

आहैमाचलसेतु कुत्सितमतिः पित्रोरनुज्ञां विना
बभ्रामाहमथापि वित्तचपलो[५] वित्तो न वित्तैर्जनैः ।
श्रीशानुग्रहलब्धयैव रचिता वाचा तदीया कथा
तत्रापि स्वयशःफलेप्सुरभवं तत्किं मयाऽसादितम् ॥ १०३ ॥

शुश्रूषितं गुरुजनाङ्घ्रियुगं न किञ्चि-
द्ध्यातं रमेशचरणाम्बुरुहं न भक्त्या ।
नोपार्जिता धनयशोऽधिगमाय विद्या
का मे गतिर्यदुगिरीशदयां विनाऽन्या ॥ १०४ ॥

दारिद्र्येण कुपूयकर्मनिरतस्त्यक्त्वा यदुक्ष्माधरे
वासं हन्त चरन् सुखं नकिमपि प्रापं तु पापं परम् ।
संसारेऽभिरुचिं तथापि विदधन्मूढो न च व्रीडितः
दुर्वृत्तस्य ममाद्य का गतिरहो श्रीशानुकम्पां विना ॥ १०५ ॥

---

५. वित्तैर्जनैर्न वित्तः — ख्यातैः पुरुषैर्न विचारितः ॥

जातानुताप इव जृम्भितजल्पनोऽह-
मेवं तथापि विरतोऽस्मि न दुष्कृतेभ्यः ।
बन्धो कृपाजलनिधे यदुशैलनाथ
श्रीश त्वमेव शरणं मम जिह्मबुद्धेः ॥ १०६ ॥

यदुगिरिपतिसेवासक्तचित्तास्समस्ता-
स्तदनवधिदयायाः पात्रतां यान्तु लोकाः ।
सुकविफणितयश्च प्राप्य तस्य प्रसादं
दशसु च विजयन्तां दिक्षु कीर्त्या समेताः ॥ १०७ ॥

इति श्रीयदुशैलनिवासिना जग्गु-शिङ्गरार्येण विरचिते
श्रीयदुशैलचम्पूप्रबन्धे
षष्ठः प्रपञ्चः

॥ श्रीः ॥
सम्पूर्णोऽयं चम्पूग्रन्थः
श्रीकृष्णार्पणमस्तु

# शोधनपत्रिका

सांख्यतीर्थं वेदान्तसाहित्यालङ्कारविद्यानित्यादिप्रशस्तिप्रकाशितैः महीशूरसंस्थानश्रीमन्महाराजास्थानविद्वद्भिः जग्गु-वेङ्कटाचार्याभिख्यैः अस्मत्पितृव्यपादैः ग्रन्थमुद्रणात्परं परिशोधिततयास्य ग्रन्थस्य व्यत्यासिताः परिशुद्धाः पदप्रयोगाः अत्र प्रकटिताः ॥

| पु० | पं० | | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 2 | 9 | (प्रशस्तिपत्रे) | अनन्यास्पृष्टा | अनन्यस्पृष्टा |
| 5 | 23 | (ग्रन्थे) | तया | तथा |
| 13 | 8 | | रसरसिक | रणरसिक |
| 16 | 14 | | परपदतः | परमपदतः |
| 19 | 23 | | अदृश्यमासीत् | अदृश्याऽसीत् |
| 20 | 8 | | पयस्स्रोतसा | तव स्रोतसा |
| 25 | 23 | | जातेन | जातात् |
| ,, | ,, | | समूहेन | समूहात् |
| ,, | ,, | | रामायाः | रमायाः |
| 26 | 14 | | सज्जनाभिनयाः | सज्जनचरिताभिनयाः |
| 27 | 7 | | विश्वामित्राध्वर | विश्वामित्रक्रतु |
| 28 | 16 | | समवोचि | समवाचि |
| 30 | 6 | | प्रकृतिगन्ध | प्रकृतिवन्ध |
| ,, | 8 | | वेगगतिं | शीघ्रगतिं |
| 31 | 18 | | वासीदनूनाधिकं | वास्यानुरूपं बभौ |
| 34 | 7 | | राजाश्रयी | राजाश्रयो |
| 35 | 5 | | मन्त्रयन् | मन्त्रयमाणः |
| 36 | 22 | | तन्डुलानि | तन्डुलान् |
| 37 | 1 | | कश्मलिते | कश्मलितं |
| ,, | 11 | | सुवर्णवर्णं | सुवर्णवर्णः |
| 39 | 5 | | फणिना | भुजगः |
| ,, | ,, | | समुद्गीरितं | समुद्गीर्णवान् |

| पु० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 39 | 10 | फलानुभावाय च | फलानुभूत्यै वत |
| ,, | 13 | परिणाह्य | परिणह्य |
| 40 | 22 | क्रन्दस्फोटित | क्रन्दव्याहत |
| 45 | 2 | सङ्किरद्विविध | चोदितप्रचुर |
| ,, | 18 | वाताहतन् | वाताहतं |
| 47 | 17 | तच्चोदितेपु | तद्दर्शितेपु |
| 48 | 7 | नरयणं | नारायणं |
| 51 | 23 | पल्लवाङ्कुरेवु | पल्लवाङ्कुरेषु |
| 53 | 20 | कर्णधारेषु, विरहित | कर्णधारेषु तथैव विरहित |
| 54 | 11 | तीर्थाणि | तीर्थानि |
| 56 | 18 | गोपिनेत्रैः | गोपिकाक्ष्णा |
| 58 | 11 | मुनिवरफणितिं | निजफणिति |
| ,, | 17 | वैक्षत | वैक्ष्यत |
| 60 | 2 | शाश्वतेति | शाश्वतीति |
| 61 | 16 | पितृष्वसृ | मातृष्वसृ |
| 62 | 22 | नास्ति | नैव |
| 64 | 7 | मिथिला | मिरिला |
| ,, | 16 | जितोङ्गहीनः | कृतोङ्गहीनः |
| 65 | 10 | सहस्राण्युद्धतान् | सहस्रं चोद्धतान् |
| 66 | 17 | थिरा | स्थिरा |
| 67 | 11 | काठिण्य | काठिन्य |
| ,, | 15 | अन्तवृत्ति | अन्तर्वृत्ति |
| 68 | 13 | मलभ्य | मनाप्य |
| ,, | 14 | दन्तुरितान्तरङ्ग | दन्तुरितं मनस्त |
| ,, | 19 | क्रीडति | अवर्तत |
| 70 | 14 | प्रहर्षणीयं | प्रहर्षिणीयम् |
| 72 | 6 | गतमेव तद्ध्रूवं | गत एव स ध्रुवं |
| ,, | ,, | विभवं दुरासदं | विभवो दुरासदः |
| 74 | 23 | वितैः | वित्तैः |

## एतद्ग्रन्थकर्त्रा विरचितानि काव्यानि

१. यदुशैलचम्पूः
२. कृष्णकथारहस्यम्
३. श्रीस्तवदशकम्
४. दाशरथिचरितम्

पुस्तकप्राप्यस्थानम्—

विद्वान् जग्गु-वेङ्कटाचार्यः,
मेलुकोटे, (यदुगिरि)

– अथवा –

जग्गु-शिंगरय्यगार्यः,
संस्कृतपण्डित,
तुमकूरु.